

॥ श्रीगणेशाय नमः ॥

# पञ्चस्वराभिधः ।



संस्कृत–भाषा–टीका सहितम् ।



हिमाचलेन्द्रदारिकां प्रचण्डचण्डदारिकाम् ।
स्वभक्तवृन्दपालिकां सदा भजामि कालिकाम् ॥ १ ॥
नमामि गोपिकावरं सदा विलासिताम्बरम् ।
लसत्सुपिङ्गलाम्बरं हताहितोघसम्वरम् ॥ २ ॥

पञ्चस्वराख्येऽत्र निरावलम्बे
दुरूहपद्यौघयुते सुगुप्त ।
श्रीकृष्णदत्तो वितनोम्यहं तां
टीकाऽतिरम्या च सुबोधिनी या ॥ ३ ॥

गभजनानामघने बलीयान् वृन्दारकाणांस्तुवणे गरीयान् ॥
मस्ताण्डधीयेपटले पटीयान् विनवेश्वरोऽभीष्टफलाय भूयात् ॥ १ ॥
जगत्प्रयाभीष्टफलप्रदोपि श्रीशङ्करोर्थित्वमुपैति यस्याम् ॥
गमलपूर्णामभिताथंदात्री विनापतन्तु वनुमे प्रणामाः ॥ २ ॥

विशाम्रगस्य मिथिलावनिमण्डनस्य
श्रीचन्द्रशेखर इति प्रथितस्य लोके ॥
श्रीमद्गुरोश्च सुधियो रघुनाथनाम्नः
पादाम्बुजे प्रविनतः सततं करोमि ॥ ३ ॥

मत्वा महेशं पितरं स्वकीयं ज्योतिः सुशास्त्रार्थविदां वरेण्यम् ॥
पञ्चस्वराख्ये वितनोति विप्रो गोविन्दशर्मा सरलाख्यटीकाम् ॥ ४ ॥

तत्रादौ निर्विघ्नपूर्वकं स्वग्रन्थपरिपूर्णार्थं सत्प्रचयगमनाय शिष्टा- ... च स्वामीष्टदेवस्य श्रीकृष्णस्य नमस्काररूपं मङ्गलाचरणं "इष्टदेवं" इत्यादिना वितनोतिस्म ।

...वं ... गोपालं कुलदैवतम् ।
... क्रियते ग्रन्थसङ्ग्रहः ॥ १ ॥
नवग्रहान्नमस्कृत्य देवीं सरस्वतीं तथा ।
प्रणिपत्य गुरुं किञ्चिज्ज्योतिः शास्त्रं निरूप्यते ॥ २ ॥

❀ सुबोधनी टीका ❀

श्रीप्रजापतिदासेन प्रजापतिदासनाम्ना गणकेन ग्रन्थसङ्ग्रहः "ग्रन्थस्य पञ्चस्वराभिधानस्य सङ्ग्रह किन्तु बालाचारिष्टायुर्दायाद्यरिष्टपरामर्शपुरः सरं त्रिपताकी केतुपताकी चेतुकुण्डली गुरुकुण्डलीचेति विचारानुसाराद्देशाद्देशान्त-देशापरामर्शेन शुभाशुभनिर्णयः क्रियते। किं कृत्वा । इष्टदेवं गोपालं श्रीकृष्णं नमस्कृत्य मनोवाक्कायकर्मभिर्न्नमस्कारं कृत्वा किं विशिष्टं तं कुलदैवतं स्वकुलो-पासनाइष्टदेवम् ॥ १ ॥

अथ ग्रन्थकारस्तु विघ्नबाहुल्यभयात्पुनर्मङ्गलाचरणं करोति नवग्रहानर्कादि-केत्वन्तग्रहान् तथा सारस्वतीं वागधिष्ठात्रीं देवीं च नमस्कृत्य । किं च गुरुं गुरुदेवं प्रणिपत्य । प्रणिपातपूर्वकं नमस्कृत्य । किञ्चित्स्वल्पं ज्योतिः शास्त्रं ज्योतिषग्रन्थं पञ्चस्वराभिधानं निरूप्यते कथ्यते ॥ २ ॥

❀ सरला टीका ❀

मैं श्रीप्रजापतिदास नामक दैवज्ञ अपने इष्टदेव तथा स्वकुल पूज्य स्वरुप श्रीकृष्णजी को नमस्कार करके पञ्चस्वरा नामक ग्रन्थका संग्रह करता हूँ ॥ १ ॥

पुन सूर्यादि नवग्रहों को तथा सरस्वती देवी और गुरुदेव को नमस्कार करके इस स्वल्प पञ्चस्वरा नामक ग्रन्थको विचार पूर्वक कहता हूँ ॥ २ ॥

स्वकुल निरूपणमाह—

सद्दैवकुलजातेन परिहारः कृतो मया।
ज्योतिर्वित्सु च सर्वेषु ब्राह्मणस्य विशेषतः ॥ ३ ॥

सं० टी०—सद्दैवकुलजातेन पवित्रे दैवाख्यवंशे चोत्पन्नेन मयाऽयं परिहारः शङ्कानिवारणरूपः कृतः कथितः। केषु सर्वेषु ज्योतिर्वित्सु ज्योतिः शास्त्रविज्ञेषु। तत्रापि ब्राह्मणेषु विशेषतः किन्तु विशेषतयाऽनेन ग्रन्थेन ज्योतिः शास्त्रज्ञेषु ब्राह्मणेषु चोपकारो भवेत्। इत्यनेन स्वकुलनिरूपणं कृतम् ॥ ३ ॥

भा० टी०—ज्योतिः शास्त्रज्ञों के लिये उसमें भी विशेष करके ज्योतिः शास्त्रज्ञ ब्राह्मणों के विशेष उपकार के निमित्त सद्दैव कुलोत्पन्न मैं प्रजापतिदास दैवज्ञ इस ग्रन्थ द्वारा शंकाओं का निराकरण करता हूं ॥ ३ ॥

निजागमं प्रकटयति—

वराहकृतसूत्रेण यत्किञ्चित्क्रियते मया।
ज्योतिर्विदः प्रपश्यन्तु ग्रहाणां सुविचारतः ॥ ४ ॥

सं० टी०—मया वराहकृतसूत्रेण वराहमिहिराचार्यकृतसूत्राणामनुसारेण यत्किञ्चित् क्रियते तच्च ज्योतिर्विदो ज्योतिः शास्त्रज्ञा ग्रहाणां सुविचारतः सम्यग्विचारपूर्वकेण प्रपश्यन्तु विलोकयन्तु ॥ ४ ॥

भा० टी०—मैं वराह मिहिराचार्य कृत सूत्र के अनुसार जो कुछ इस ग्रन्थ में लिखता हूँ उसे ज्योतिः शास्त्रज्ञ चतुरजन ग्रहों के सुन्दर विचार ( अर्थात् वक्ष्यमाण बालारिष्ट आयुर्दायाधारिष्ट एवं त्रिपताकी केतु पताकि केतु कुण्डली गुरु कुण्डली इत्यादि द्वारा निरूपित शुभाशुभ विचार ) द्वारा सभी फलों को देखें ॥ ४ ॥

अथ श्लोकचतुष्टयेन निजकृतग्रन्थस्यविशेषप्रयोजनं निरूपयति—

पञ्चस्वराभिधानं च ग्रन्थं निधनसंश्रयम्।
किञ्चिदुद्देशगम्यं च स्वल्पं वक्ष्यामि शास्त्रतम् ॥ ५ ॥

ज्योतिर्विद्भिः पुरा सर्वैः कृतो निर्णय विस्तरः ।
तन्वादि व्ययपर्यन्तं राशिचक्रे व्यवस्थितम् ॥ ६ ॥
अपास्यमरणं जीवं प्रवदन्ति शुभाशुभम् ।
मरिष्यति यदा दैवात्कोभुङ्क्ते तच्छुभाशुभम् ॥ ७ ॥
तस्मात्सर्वं प्रयत्नेन आयुः स्थानं विचिन्तयेत् ।
बालस्य जन्ममात्रेण जन्मारिष्टं विचारयेत् ॥ ८ ॥

सं० टी०—अहं पद्यस्वराभिधानं पद्यस्वराख्यं ग्रन्थं स्वल्पं लघुरूपं पुनः किञ्चिदुद्देशगम्यं गुरोः किञ्चिच्छ्रवणं च कृत्वा वक्ष्यामि । तं कथम्भूतं निधनसंश्रयं निधनस्य मरणस्याश्रयो यस्मिन्नर्थान्मरणनिर्णयरूपम् ॥ ५ ॥

पुरा पूर्वस्मिन् समये सर्वैर्ज्योतिः शास्त्रविद्भिः ज्योतिशास्त्रज्ञैस्तु राशिचक्रे राशिसमूहे व्यवस्थितं स्थापितं तन्वादिव्ययपर्यन्तं लग्नादिद्वादशभावावधिकं यथा स्यात्तथा निर्णयविस्तरस्तज्जनितशुभाशुभफलकथनाधिकः कृतः । अर्थात्तन्निर्मितेषु ग्रन्थेषु केवलं लग्नादिद्वादशभावानां फलमेवस्थितमिति ॥ ६ ॥

तत्र लग्नादिभावपरामर्शे ते गणका मरणंजीवनं चापास्य विहाय शुभाशुभं प्रवदन्ति वदन्ति । यदा दैवाददिष्टवशाज्जातको मरिष्यति तदा तच्छुभाशुभं तद्विहितं शुभाशुभफलंको भुङ्क्ते किन्तु तल्लग्नोत्पन्ननरस्याभावात्तदुक्तफल व्यर्थमेवजातम् । अनेन तन्मतं दुषितमिति ॥ ७ ॥

तस्मात्कारणात्सर्वप्रयत्नेनायु स्थान मृत्युनिर्णयरूपस्थानं गणको विचारयेत् । अनेन ग्रन्थप्रयोजनकथन जातम् । बालस्योत्पन्नस्य जन्ममात्रेण जन्मसमयावगममात्रेण जन्मारिष्टं जन्मसमयोद्भवमरिष्टं विचारयेत् ॥ ८ ॥

भा० टी०—मैं प्रजापति दास दैवज्ञ जिस ग्रन्थ से मृत्यु का निश्चित ज्ञान होता है उस लघु पद्यस्वरा ग्रन्थ को गुरु से कुछ ज्ञान प्राप्त करके कहता हूँ क्योंकि प्राचीन ज्योतिर्विदों ने लग्नादि द्वादश भवों का विस्तार पूर्वक विचार किया है परंतु वे जीवन मरण के निश्चित विचारों को छोड़कर शुभाशुभ

अथ राशि चक्रेऽङ्क स्थापनमाह—

> वेदपञ्चनखान्दत्वा वह्न्यष्ट समयं तथा ॥
> भुवनं युगलञ्चैव दश देयास्तथैव च ॥ १५ ॥

सं० टी०—वेदपञ्चनखान् तथा वह्न्यष्टसमयं दत्वा। तथैव भुवन चतुर्दश-सङ्ख्याकं युगलं द्विमितं दश चैते अङ्का देयाः स्थाप्याः किलशाद्द्वन्द्वावधि। अत्रायं भावः।-कलशादिलोमगणनया मिथुनपर्यन्तं याम्योत्तराख्यस्य तथा कर्णाकाराख्यस्याधःस्थस्यार्गलाख्यस्य च वेधक्रमेण पूर्वोक्ताङ्का वेदाद्या यथाक्रमं स्थाप्याः। तद्यथा। अङ्कस्थापनचक्रे मध्यरेखाग्रगं मेषराशिमारभ्य पूर्वरूपगणनया वह्निकोणाग्रगं कुम्भराशि च प्रकल्प्योच्यते। कुम्भराशौ चतुः सङ्ख्याकं तत्सम्मुखेऽर्थायाम्योत्तररूपवेधे मिथुनराशौ पञ्च तथा कुम्भराशेरधःस्थकर्णाकारवेधे कन्याराशौ विंशतिमितम्। एवं तत उत्क्रमगणनया तत्पृष्ठभागे मकरराशौ त्रिसङ्ख्याकं ततस्तद्याम्योत्तररूपवेधे कर्कराशौ चाष्टसङ्ख्याकं तथा तदधःस्थवेधे तुलाराशौ रसमितम्। एवं धनुषिराशौ चतुर्दशमितं तथा तत्सम्मुखवेधे सिंहराशौ द्विमितं पुनस्तदधःस्थे वृश्चिकराशौ दशमितमेवेति लेख्यम्। तत्रापि मीनमेषवृषराशीनामेवमङ्काभावो जातः। यतो वक्ष्यमाणविधिना कस्यापि राशेः कथितेन राशित्रयेण सार्धं वेधो नास्ति किन्तु तद्राशित्रयगतमङ्कस्य चान्यराशिगतैर्वेधो भवेत्॥ १५ ॥

भा० टी०—पूर्व श्लोक में कहे गये "कलशाद्वन्द्वपर्यन्तमङ्कदान" के अङ्को को लाङ्गल चक्र की रीति से स्थापन क्रम को बतलाते हैं कि लाङ्गल चक्रको रीति से चार पांच बीस तथा तीन आठ छव और चौदह दो दश स्थापन करे। यथा अंकदानार्थ त्रिपताकि चक्र तथा लाङ्गल चक्र देखिये॥ १५ ॥

अङ्कस्थापनार्थं त्रिपताकिचक्रम् (नं० २)  लाङ्गलचक्रम् ( नं० ३ )




तथान्यैरप्युक्तम्—

> वेदवह्नीन्द्रदिक्तर्कनखबाहुगजाः शराः ।
> अङ्काः देया क्रमादेते कलशादौ विपर्ययात् ॥ १ ॥

सं० टी०—अस्यार्थस्तु । कलशात्कुम्भाद्विपर्ययात्पृष्ठभागस्थराशीनां क्रमात् वेदवह्नीन्द्रदिक्तर्कनखबाहुगजास्तथा शराश्चैते अङ्का स्वसङ्ख्यासमाप्ति यावदर्था- न्मिथुनराशिपर्यन्तं देया- स्थाप्याः । यथ। कुम्भे चतुः सङ्ख्याकमङ्कं ततो मकरे त्रिमितम् । तथा धनुषि चतुर्दशमितमित्थं विधिना मिथुने शरमितम् ॥ १६ ॥

भा० टी०—इन्हीं अंकों को अन्याचार्यों के प्रमाण पुष्ट करते हैं कि कुम्भ से विलोम राशियों में मिथुन राशि पर्यन्त क्रम से ४।३।१४।१०।६।२०। १।८।५। इन सब अंकों को क्रम से स्थापन करना चाहिये ॥ १ ॥

तथान्यैरपि ग्रहस्थापन चक्रपक्षेवाऽङ्कदानमूचुः—

पञ्चाष्टयुग्मविंशाश्च षट्दशेन्द्राग्निसागराः ।
कर्कटान्मीनपर्यन्त मङ्कदानं सुनिश्चितम् ॥ १६ ॥

सं० टी०—पञ्चाष्टयुग्मविंशास्तथा षट्दशेन्द्राग्निसागरा एते अङ्काः कर्कटात्कर्कराशिमारभ्य क्रमगणनया मीनपर्यन्तं मीनपर्यन्तं मीनराश्यवधिकं देया इत्यङ्कदानं सुनिश्चितं कथितं प्राचीनैरिति शेषः । अत्रेदमवधेयम् । ग्रहस्थापनचक्रपक्षे चान्यये पूर्वापराख्यरेखायां मेषराशिमारभ्य द्वादश राशयो निवेशिताः सन्ति । अतोऽङ्कस्थापनचक्रे यत्र कुम्भराशिस्तत्रैव ग्रहस्थापनचक्रे मीनराशिः ॥ तथा तत्र यत्र मिथुनराशिस्तत्रैवात्र कर्कराशिः । एवं सर्वत्र बोध्यम् । तेनात्र कर्कराशौ पञ्च ततः सिंहराशावष्टौ तथा कन्याराशौ विंशतिः । एवं मीने वेदमितं जातम् । एवं चक्रद्वयवशादपि स्वस्वरेखाग्रेषु चाङ्कप्रमाणमेकमेव जातम् ॥१६॥

अत्र मदीयं सूत्रम् ।

शून्यं वियद्व्योमसमं शराश्च
नागाश्च नेत्रं नखसम्मिता वै ।
रसाः खचन्द्राः खलु शक्रतुल्या
रामाश्चवेदा अजतोऽत्र बोध्याः ॥ १ ॥
आद्यं चरादित्रयमन्तरेण
चरे शरा विंशतिरत्र शक्राः ।
स्थिरे गजाः षट् किल रामतुल्या
युग्मं खचन्द्रा निगमास्तथाऽन्त्ये ॥ २ ॥

अत्र ग्रहस्थापनचक्रे मेषादेते चाङ्का ज्ञेयाः ॥ १ ॥ २ ॥

भा० टी०—अन्य प्राचीनाचार्यों ने ग्रह स्थापन चक्र ही में क्रम से कर्क से मीन पर्यन्त राशियों में क्रमशः ५।८।२।२०।६।१०।१४।३।४ इन अंकों की स्थापना की है। वस्तु स्थिति यही है कि अंक स्थापन चक्र में जहां कुम्भ राशि है वहां ग्रह स्थापन चक्र में मीन और जहां मिथुन राशि है वहां कर्क राशि है [illegible] ॥ १६ ॥

## ग्रहस्थापनाङ्कस्थापनमिश्रितत्रिपताकिचक्रम् ( नं० ४ )




अथ वेध प्रकारमाह—

> मेषादिनामचिह्नानि ग्रहयुक्तानि कारयेत् ।
> एकरेखास्थिते खेटे त्रितये वेध निश्चयः ॥ १७ ॥
> लग्ने वा दक्षिणे वामे सम्मुखे ग्रहसंस्थिते ।
> खण्डे ज्ञेयं शिशोरिष्टं दिनं मासश्च हायनम् । १८ ॥

सं० टी०—ग्रहयुक्तानि ग्रहसहितानि मेषादिनामचिह्नानि मेषादीन् राशीनां नामाक्षरैश्चिह्नानि कारयेद्गणक इति शेषः । अयमत्रफलितार्थः ।। जन्मकालिका ग्रहा यत्र यत्र राशौ वर्तन्ते ते राशयोऽप्यत्रत्रिपताकीचक्रे यत्र यत्र स्थितास्तत्र तत्र ते खेटास्तथा जन्मकालिकं लग्नञ्चेति स्थाप्यम् ।। अत्रैकरेखास्थिते खेटे ग्रहे सति त्रितये स्थानत्रयेऽपि वेधनिश्चयः किन्तु वेधनिर्णयो बोध्यः ।। १७ ।

सं॰ टी॰—अत्रोदाहरणम् । तद्यथा । तत्र ( अक ) ( गख ) ( इउ ) इति रेखात्रयं पूर्वापररूपम् । तथा ( अक ) ( ग ख ) ( इ उ ) इति याम्योत्तरं रेखात्रयम् । एवं (अक) (खख) (उउ) (कइ) (ख ग) (उअ) (इइ) (गग) (अअ) ( अउ ) (ग ख) (इक) इति कर्णाकारं द्वादश सङ्ख्यकं रेखाप्रमाणं च विधाय तदा जातं त्रिपाताकीचक्रस्वरूपम् ।




सं॰ टी॰--अत्र ग्रहस्थापनापेक्षया ( इउ ) पूर्वापररूपाया अन्त्यरेखायाः ( इ ) चिन्होर्ध्वे ग्रहाग्रे मेषराशिमारभ्य स्वस्वाद्यक्षरोपलक्षिताः पूर्वाभिमुखगणनया द्वादश राशयो देयाः । अत्रैवमङ्कस्थापनचक्रस्थे ( गख ) पूर्वापराया मध्यरेखायां स्वरविशिष्टं मेषराशिमारभ्य क्रमगणनया स्वरविशिष्टः स्वस्वाद्यक्षरोपलक्षिता द्वादश राशयः स्थाप्याः । अथाङ्कस्थापनमुच्यते । तत्राङ्क

स्थापनाजादिवशात ( क ) स्वरविशिष्ठे कुम्भराशौ चत्वारः । तस्य सम्मुखे याम्योत्तरसूत्रे ( अ ) बिन्दौ स्वरविशिष्टमिथुनराशौपञ्च । एव तत्कुम्भराशेरधःस्थे कर्णाकारसूत्रे ( क ) चिह्ने कन्याराशौ विंशतिः एव तन्मकरराशौ वह्निमितं तथा तद्याम्योत्तरसूत्रे ( ग ) बिन्दौ तत्कीटराशौ चाष्टौ । तथा तत्कर्णाकारसूत्रे तदधःस्थे तुलाराशौ षट्च-त्वार्यक्रमङ्कम् । एवधनुषि चतुर्दश । तथा तद्याम्योत्तरसूत्रे ( इ ) बिन्दे तत्सिंहे द्विकम् । तथा तदधःस्थे कर्णाकारसूत्रे ( उ ) समाख्यचिन्हे वृश्चि कराशौ दशचेति स्थाप्यम् ॥ तथामीने मेषे वृषे चाङ्कानां पठिताभावात्तत्स्थान त्रये शून्यानि बोध्यानि । अथवा विहितमदीयसूत्रानुसारेण ग्रहस्थापनपक्षे मेष मारभ्य मीनपर्यन्त "शून्यवियद्व्योमसममित्याद्युक्ता वा "शायचरादित्रय मन्तरेण" इति सूत्रोक्ता अङ्का. क्रमात्स्थाप्या ॥ १७ ॥

लग्न इत्यत्र पञ्चम्यर्थे सप्तमी सा"तेन लग्नादर्थाज्ज्ञातकजन्मकालिकलग्नाद् दक्षिणे किन्तु दक्षिणदिग्गततिर्यग्रेखाग्रदण्डे ग्रहे सति वा वामे वामगततिर्यग्रेखा ग्रदण्डे । तथा सम्मुखे सम्मुखगतरेखाग्रदण्डे वेधो वेधविचारो ज्ञेय । तत्र वेधे शिशोर्बालस्य दिनं मासं तथा हायन वर्षं चारिष्टं ज्ञेयामिति ॥ अत्रेदमवधेयम् । पूर्वोक्तप्रकारेण त्रिपताकीसमाख्य चक्र विधाय तत्र खेटस्थापनमेषादिराशिवशा जन्मकालिकलग्नंदेयं यत्र राशौ भवेत्तस्मादेव वेधविचारः कर्त्तव्य । तत्र जन्मकालिकान् खेटाश्च दत्त्वा दक्षिणादिवेधत्रितयेपि जन्मलग्नस्य यद्दण्डगतखेटेन सह वेधो भवेत्तद्दण्डस्थिताङ्कं पूर्वविहित अङ्कस्थापनचक्राद्वगम्य ग्रहस्थापन-चक्रे तत्र दण्डे तदङ्कमानं लेख्यम् । ततस्तदङ्कतुल्ये वर्षे मासेवा दिने बालस्या रिष्ट भवेत् तत्रापि वेधे ज्ञाते वक्ष्यमाणविधिना दण्डेशे पापे सति तदा याम्य दण्डगतपापग्रहवेधस्थितदण्डाङ्कप्रमाणेन निधनम् । एव दक्षिणवेधाभावेऽत्र से सति वामदण्डस्यपापग्रहवेधस्थाननिष्टाङ्कमानेन निधनम् । एवं तद्द्वयस्यापिशाम्यवा-मारव्यदण्डस्य यदा वेधाभावस्तदा सम्मुखदण्डगतपापखेटजवेधस्थानगताङ्कप्रमा-णेन मरणम् । एवं यदा जन्मलग्नस्य वामदक्षिणसम्मुखस्थे पापे सह वेधत्रयं

जातं तदा ॥ वेधकारकाणां खेटानां मध्ये वक्ष्यमाणविधिना यः खेटोऽधिकबलवान् तद्गतदण्डस्थिताङ्कप्रमाणेन मरणं विधेयम् ।

तथाऽत्र विश्वेश्वरः—

"जन्मलग्ने यदा वेधः पापदण्डे मृतिं वदेत् ।
दक्षवामाग्रमानेन पूर्वाभावे परं विदुः ॥ १ ॥
यदा वेधत्रयाणां च जन्मलग्नेऽशुभग्रहे ।
प्राप्तिस्तत्र बलाधिक्याद्वामदक्षिणसम्मुखैः ॥ २ ॥

एवं वेधत्रयाभावस्तदा जन्मलग्नात्क्रूरग्रहाक्रमेण क्रूरग्रहस्थानात्ककड्ख्यामाने-नार्धाजन्मलग्नगतदण्डाङ्कप्रमाणेन निधनं स्यात् । अत्र मेषादित्रये राशौ पूर्वरीत्या चाङ्काभावादत्र जन्मलग्ने कथं वेधो भवेत् । तदुच्यते । कथितवेधत्र-याभावे सति मेषादित्रये राशौ जन्मलग्नञ्च तत्र पापग्रहस्थितिस्तदा तद्दक्षिणवा-माभिमुखस्थानगतानामङ्कानां त्रयाणां योगप्रमाणेन मरणम् ।

तदुक्तं वराहेण—

अभावे सर्ववेधानां ग्रहाक्रमणतो वदेत् ।
मेषादित्रितये योऽयं मानं वामाग्रदक्षिणैः ॥ १ ॥

एवमत्र दक्षिणदण्डगतः । तथा वामदण्डगतः । तत्सम्मुखदण्डनिष्ठः । जन्मलग्नगतः । इति चतुर्धा वेधो जातः । अत्रैव निधनसमयावबोधं प्रकारा-न्तरेण वदति ।

चलवर्षे यदा वेधो देण्डेशः पापसम्भवः ।
तदा मृत्युर्भवेत्तत्र अन्यथा कष्टमादिशेत् ॥ १ ॥

यदा जन्मकाले दण्डेशः स्वयं पापस्तदा वक्ष्यमाणोक्ते चलवर्षे मासे च वेधे सति नूनमवश्यं मृत्युर्भवेत् । अन्यथाकिन्तु दण्डेशस्य शुभत्वे कष्टं कष्टमात्रं चादिशेत्कथयेदित्यर्थः ॥ १८ ॥

भा० टी०—पूर्वोक्त प्रकार से त्रिपताकि चक्र लिखकर मेषादि राशियों की स्थापना करके जन्म समय जो २ ग्रह जिस २ राशि में हो उनको उनको उन २ राशियों में स्थापित करे । एक रेखा में स्थित ग्रह से तीन स्थान में अर्थात् ग्रह से दक्षिण और वाम गत तिर्यक् रेखाग्र में तथा सम्मुखगत रेखाग्र में स्थित ग्रहों से वेध होता है ॥ १७ ॥

अथवा जन्म लग्न से दक्षिण और वाम तथा सम्मुख रेखाग्र गत ग्रह हों तो ( वक्ष्यमाण ४४ वा ४५ वां श्लोक सबलेत्र ग्रहे पापे दिनमात्रं विधीयते ) इत्यादि के अनुसार बालक के अरिष्ट का निश्चय करे अर्थात् इतने वर्ष मास दिन पर अरिष्टादि होगा इस का निश्चय करे ॥ १८ ॥

अथ छात्राणांबोधजननार्थं पुनः वेधान् दर्शयति—

कर्के धनुषि मीने च हरिकोटघटेषु च ।
कन्यामकर यूकेषु तुलामीनाङ्गनासु च ॥ १९ ॥
वृश्चिके घटसिंहे च धनुर्मकरकर्कटे ।
मकरे च धनुः कन्ये घटे सिंहे च वृश्चिके ॥ २० ॥
मीने च कर्कटे यूके मेषकन्याधनुर्वृषे ।
वृषे सिंहे च कुम्भे च वृश्चिके च विनिर्दिशेत् ॥ २१ ॥
तुलामकरकर्केषु वेधं चैवं यथाक्रमम् ।
यथा योगं यथान्यायं यथा भाग विनिर्दिशेत् ॥ २२ ॥

सं० टी०—अथ पूर्वन्तु ग्रहस्थापनचक्रे चान्त्यरेखाग्रे मेषराशिमारभ्य द्वादश राशयो निवेशितास्तेनात्र तदभिप्रायेण कीटादिग्रहवेधं दर्शयति । तत्र कर्के कर्क राशौ धनुषि मीने मीनराशौ च खेटे सति मिथो वेधो जायते । यतः कर्कात्सम्मुखे मीनराशिस्तथा कर्णाकारसूत्रस्थचापराशिः स्यादिति विहितचक्रे स्पष्टमेवातो वेधो विहितः । परञ्च कर्कराशेः कर्णाकारसूत्रे ( अ ग्र ) वृषे मिथुनराशि वर्तते तथापि तस्य मिथुनेन सह वेधो न विहितोः मेषादिराशित्रयेणान्येषां वेधाभावस्वीकारागमवशात् । एवमन्यवेधोऽपि बोध्यः । तद्यथा । एवं हरौ सिंहराशौकीटे वृश्चिकराशौ घटे कुम्भराशौ च वेधः । तथा कन्याराशौ मकरराशौ यूके तुलाराशौ च वेधः । एवं तुलामीनाङ्गनासु वेधः किन्तु तुलाराशौ मीनराशौ कन्याराशौ चैकत्र खेटे चान्यतमेजन्मलग्ने वेधः ॥ १९ ॥

स० टी०—छात्राणां बोधजननार्थं पुनः सर्वराशिगतवेधान् दर्शयति । वृश्चिके ग्रहे सति कुम्भसिंहयोर्वेध । तथा धनुषि ग्रहे सति मकरकर्कटयोर्वेध । मकरराशौ खेटे सति धनुः कन्याराश्योर्वेध । तथा घटे कुम्भराशौ ग्रहे सति सिंहवृश्चिकराश्योर्यत्र जन्मलग्नं तत्र वेधो जायते ॥ २० ॥

मीनराशौ खेटे सति कर्कटे कर्कराशौ वृषेतुलाराशौ च वेध । मेषराशौ जन्मलग्ने सति कन्याधनुःसंज्ञानां राशीनां गतखेटानां दक्षिणाभिमुखवामाभिधक्रमाद्वेधः । एवं वृषे जन्मलग्ने सति सिंहे दक्षिणाख्यस्तथा वृश्चिक सम्मुखाख्यस्तथा कुम्भे वामाख्यो वेध स्यादिति विनिर्दिशेत्कथयेत् । एवं कर्कादिमीनपर्यन्तं चान्यतमे जन्मलग्ने सति द्वयोर्द्वयोराश्योर्गतानां खेटानां वेधः प्रदर्शितः ॥ २१ ॥

एवं तुलामकरकर्केषु यथाक्रमं वेधं वदेत् । परन्त्वयं वेधः पूर्वापरस्थायां मध्यरेखायां मेषस्थापनवशाद्यत्पूर्वं चाङ्कस्थापनचक्रं प्रतिपादितं तदधिकृत्य प्रदर्शितं । तत्र यथायोग जन्मलग्नदक्षाभिमुखवामाख्यवेधवशात् । यथान्यथं रव्यादिखेटानां स्वोच्चनीचवक्रादिवशात् । यथा आर्म वर्षमासदिनानां चाक्रमानवशाद्वालारिष्ट विनिर्दिशेद्वदेत् ॥ २२ ॥

भा० टी०—ग्रहस्थापनमिपताकि चक्रके अभिप्राय से कर्क राशिमें ग्रहहों या जन्मलग्न हो तो उसको धन और मीन राशिमें स्थित ग्रहों से वेध होता है अर्थात् कर्क से सम्मुख मीन राशि तथा कर्णाकार धन राशि है इसलिये कर्क धनु और मीनका परस्पर वेध स्पष्ट है । अथ च कर्कसे कर्णाकार मिथुन राशि भी है परन्तु मेषादि तीन राशियों से अन्य राशियों का वेधाभाव-आगम से स्वीकृत है इसलिये मिथुन का पाठ न लिखकर "कर्के धनुषि मीने" पाठ पठित है एवं सभी राशियों का वेध पठित है यथा सिंह राशिस्थ ग्रहसे वृश्चिक और कुम्भ से वेध होता है एवं कन्या राशिसे मकर तुलासे, तुला राशिको मीन कन्या से, वृश्चिक राशिको कुम्भ सिंहसे, धन राशिको मकर कर्कसे, मकर राशिको धनु और कन्या से, कुम्भ राशिको सिंह और

वृश्चिक से, मीन राशिको कर्क तुलासे तथा मेषको कन्या धनु और मीन राशिसे वेध होता है अर्थात् मेष राशि जन्म लग्न हो तो कन्या राशिसे दक्षिण वेध, धन राशिसे सम्मुख वेध तथा मीन राशिसे वाम वेध होता है। एवं वृषसे सिंह वृश्चिक और कुम्भ राशिको क्रम से दक्षिण सम्मुख और वाम वेध होता है तथा मिथुन राशि से तुला मकर और कर्क राशिसे क्रम से सम्मुख वाम और दक्षिण वेध होता है । इसमें यथा योग अर्थात् दक्षिण संमुख और वाम वेध के वश यथा न्याय अर्थात् स्वोच्चनीचादि के बलानुसार यथा भाग अर्थात् वर्ष मास और दिनके मानानुसार बालारिष्ट को कहे। आचार्य ने इन श्लोकों से १८ श्लोक को स्पष्टीकरण किया है जिससे वेध ज्ञान अति सुगम से हो जाय* ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

एकोनविंशतिः कर्के सिंहे सप्तदशैव तु ।
षट्त्रिंशदेव कन्यायां तुला षड्विंशतिस्तथा ॥ २३ ॥
वृश्चिके सिंहवज्ज्ञेयं नवयुग्मं धनुर्धरे ।
तुलायां च यथा वर्षं तथैव मकरेऽपि च ॥ २४ ॥
कुम्भे वृषे यथा सिंहे मीने चैव यथा धनुः ।
मेषे षोडश वर्षाणि मिथुने नवतेत्रकम्† ॥ २५ ॥
पूर्वं वेदादयो येऽङ्का त्रिषु स्थानेषु कीर्तिताः ।
तेऽमी लाङ्गलवेधेऽस्मिन्नेकीकृत्य प्रकीर्तिताः ॥ २६ ॥
यथाङ्को दृश्यते मासो दिनं वर्षं तथैव च ।
ग्रहाणां च बलं बुध्वा पूर्वोक्तं तु विनिर्दिशेत् ॥ २७ ॥

* एवं कर्कादि मीन पर्यन्त राशियों को दो दो राशियों से तथा मेष वृष मिथुन राशि को तीन २ राशियों से वेध कहा गया है । गोविन्दशर्मा ।

† अत्र तु मानैक्येन नवत्रयमायात्यतः "मिथुने तु नवत्रयम्" ।
इति पाठः साधुः प्रतिभातीति गोविन्दः ॥

सं०-टी०—अत्रान्त्यश्लोकप्रगताजादिस्थापनवशात्प्रिपताकीचक्रे मीनादितः कर्कराशिपर्यन्तं वेदाद्यङ्कानां स्थापनपक्षे यस्य राशेर्येन येन सह वेध पूर्वं प्रदर्शितस्तस्य राश्यङ्कसंख्यायास्तथा वेधजनितराशिस्थिताङ्कसङ्ख्यायाश्च योग-समाः सङ्ख्याः कर्कादितो मीनपर्यन्तमाचार्यैर्विहिताः । यथा । कर्कराशेः पूर्वविधिना मीनधनुर्धराभ्यां सह वेधस्तेनात्र कर्कराश्यङ्कस्य पञ्चमितस्य ( ५ ) तथा मीनस्थाङ्कस्य वेदमितस्य च ( ४ ) तथाधनुर्धरस्थस्य खेन्दुमितस्य ( १० ) चेति राशित्रयगताङ्कयोगे कृते चैकोनविंशतिः कर्कराशौ जाता । एवंसर्वत्र बोध्यम् । एवं सम्पन्नाङ्कमानं कर्के चैकोनविंशतिः स्यादर्थोंदितुल्य-माने पूर्ववद्वर्षादिकल्पनावशाद्बालस्यारिष्टं वक्तव्यम् । एवं सिंहेवेधे सति सप्तदश-सङ्ख्यामाने रिष्टम् । तथा कन्यायां षट्त्रिंशदेवं तुल्यायां षड्विंशतिः ॥ २३ ॥

एवं वृश्चिके वेधे जाते सिंहवदर्थात्सप्तदशसङ्ख्या तथा धनुर्धरे धनुषि नवयुग्मं स्यादर्थादेकोनत्रिंशदिति । तुलायां यथा वर्षं तथैव मकरे स्यादर्थात्षड्विंशतिः ॥ २४ ॥

एवं सिंहे यथाङ्कमानं विहितं तथैव तन्मितैवार्थात्सप्तदशसङ्ख्यैव कुम्भे कुम्भराशौ वृषे वृषराशौ च बोध्या । मीने यथाधनुः किन्तु धनुर्धरवदर्था-देकोनत्रिंशन्मिता । मेषे षोडशवर्षाणि मानानि तथा मिथुने तु नवत्रयं एकोन चत्वारिंशत् ॥ २५ ॥

मया पूर्वमङ्कस्थापनचक्रकथने त्रिषु स्थानेषु किन्तु कर्कादितो मीनपर्यन्तं स्वस्थानं तथा दक्षवामाभिमुखस्थानां मध्ये स्थानद्वयं चेति स्थानत्रये तथा मेषवृषमिथुनराशीनां स्वस्थानजानामङ्कानामभावात्तेषां त्रयाणां राशीनां दक्षिणादिवेधजाते स्थानत्रये ये वेदादयोऽङ्काः कीर्तिताः कथितास्तेऽमी सर्वेऽस्मिन् लाङ्गलवेधे चैकीकृत्य तद्योगं कृत्वाऽत्र प्रकीर्तिताः ॥ २६ ॥

अङ्काः किन्तु स्थानत्रयाङ्को यथा दृश्यते येन प्रकारेणावगतः । तथैव ग्रहाणां वक्ष्यमाणप्रकारेण बलं चकारादबलं बुध्वा पूर्वोक्तं पूर्वकथितं मास दिनं वर्षं चेति सर्वं विनिर्दिश्येत्कथयेद्गणक इति शेषः । अर्थात्क्रमं प्राप्तेषु मासदिनवर्षेषु बालस्यारिष्टं जानीयात् ॥ २७ ॥

भा० टी०—त्रिपताकि चक्र में अङ्क स्थापन विधि से जो अङ्क स्थापित हैं उन अङ्कों का मद्द स्थापन चक्र के अनुसार जो वेधानयन विधि से कर्कादि राशियों का वेधैक्य होता है उसे लिखते हैं कर्क राशिका १९ सिंह का १७ कन्या का ३६ तुला का २६ वृश्चिक का १७ धनु का २९ मकर का २६ कुंभ का १७ मीन का २९ मेष का १६ वृष का १७ और मिथुन राशि का वेधैक्य ३९ कहा गया है ॥ २३ ॥ २४ ॥ २५ ॥

पूर्वोक्त अङ्क स्थान चक्रमें जो वेदादि अंक कहे हैं उनका पूर्वोक्त वेधानुसार तीन ३ स्थानों के अंकोंका योग करके योग मानको मैं यहां कहता हूं * ॥२६॥

अब बताते हैं कि इस प्रकार जो अंक आवे उतने दिन मास वर्ष पर वक्ष्यमाण प्रकारसे ग्रहोंके बलानुसार बालारिष्ट के समय को निश्चित करे॥२७॥

इसके स्पष्टता तथा सुगमता के लिये यहां मैं दोनों चक्रों को लिख देता हूं । कर्क से मीन पर्यन्त राशियों में स्वस्थानने तथा दक्ष, वाम और सम्मुख में दो ही स्थानों का एवं स्थान त्रय का योग किया गया है तथा मेष वृष मिथुन इन तीन राशियों में स्वस्थान के अंकाभाव से दक्ष संमुख और वाम स्थित स्थान का योग किया है यथा मेष के संमुख धनराशि का अंक=१० दक्षिण स्थित कन्या का अंक=२ वाम रेखास्थित मीनका अंक=४ तीनों का ऐक्य=१६ । एवं वृष मिथुन का क्रमशः १७।३९ ॥

तथा कर्क स्थान स्थित अंक=५ दक्षिण कर्णाकार स्थित अंक=१० एवं संमुखस्थित ४ तीनों का ऐक्य=१९ एवं सिंहादिमान क्रमशः १७।३६।२६। १७।२९।२६।१७।२९ होता है ।

---

* विशेषता यह है कि मेष वृष मिथुन राशियों में स्वस्थान स्थित अङ्कों का अभाव तथा कर्क सिंह कन्या राशियों में वाम स्थित अङ्कों का अभाव, तुला वृश्चिक धन राशियों में सम्मुख अङ्कों का अभाव और मकर कुम्भ मीन राशियों में दक्षिण कर्ण स्थित अङ्कों का अभाव है इसलिये आचार्य ने तीन ३ ही स्थानों के अङ्कों का योग किया है । गोविन्द शर्मा ।

अथ ग्रहाणां बलाबलनिरूपणाय प्रथमं राशीशादिकं दर्शयति ।—

कुज शुक्र बुधेन्द्वर्क सौम्य शुक्रावनीसुताम् ।
जीवार्कि भानुजेज्यानां क्षेत्राणि स्युरजादयः ॥ २८ ॥

सं० टी०—श्लोकक्रमेणाजादित एतेषां ग्रहाणां क्षेत्राणि स्युः । अथैवं ग्रहाणां नैसर्गिकं मित्रादिकं वराहमिहिरादिभिः प्राचीनैः ।

"शत्रू मन्दसितौ समश्च शशिजो मित्राणि शेषा रवेः ।
तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः ॥ १ ॥
जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सितार्की समौ ।
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥ २ ॥
सूरेः सौम्य सितावरी रविसुतो मध्यो परे त्वन्यथा ।
सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी ॥ ३ ॥
शुक्रज्ञौ सुहृदौ समः सुरगुरुः सौरस्य चान्येऽरयः" इति यद्विहितं तदेवात्र बोध्यम् । एवं तात्कालिकं मित्रामित्र "अन्योन्यस्य धनव्ययायसहजव्यापारबन्धु-स्थितास्तत्काले सुहृदः" उक्तातिरिक्तस्था शत्रवः । इति तैर्यद्विहितं तदेव्यत्र बोध्यम् ॥ २८ ॥

भा० टी०—मेषादि राशियों के क्रम से मगल शुक्र बुध चन्द्रमा सूर्य बुध शुक्र मंगल बृहस्पति शनि, शनि और बृहस्पति स्वामी है ॥ २८ ॥

स्वक्षेत्रस्थे वलं पूर्णं पादोनं मित्रभे स्थिते ।
अर्धं सम गृहे ज्ञेयं पादं शत्रु गृहे स्थिते ॥ २९ ॥
एतदुक्तं वलं सौम्ये क्रूरे ज्ञेयं विपर्ययात् ।
शत्रुगेहस्थिते पूर्णं पादोनं समवेश्मनि ॥ ३० ॥
अर्धं मित्रगृहे ज्ञेयं पादं पापे स्ववेश्मनि ।

सं० टी०—ग्रहे स्वक्षेत्रस्थे निजगृहगते सति पूर्णं रूपं बलम्। तथा मित्रभे स्वमित्रग्रहस्य राशौ स्थिते खेटे सति पादोनं (४५) बलम्। समगृहे स्वसमग्रहस्य राशौ स्थिते खेटे सत्यर्द्धं (३०) बलम्। शत्रुगृहे स्वशत्रुग्रहस्य राशौ खेटे स्थिते सति पादं (१५) बलं ज्ञेयमिति ॥ २९ ॥

एवममुनाप्रकारेण यद्बलं कथितमेवद्बलं सौम्ये वक्ष्यमाणशुभग्रहविषयकमित्यर्थः। क्रूरे पापग्रहे विपर्ययात्कथितबलविचारस्य विलोमाद्बलं ज्ञेयमिति। तदेव स्पष्टयति–शत्रुगेहस्थिते पापे पापखेटे सति पूर्णं बलम्। तथा समवैरमनि समग्रहराशौ पादोनं बलम् मित्रगृहे स्थिते पापे सत्यर्द्धं बलम्। तथा स्ववेश्मनि निजगृहे पादं बलमिति ज्ञेयं गणकेनेति शेषः ॥ ३० ॥

भा० टी०—अरिष्टादि निर्णय के लिये बलाबल का निर्णय करते हैं। यदि शुभ ग्रह अपने गृह का हो तो पूर्णबल (६० कला) मित्र राशि का हो तो चतुर्थांशोन (४५क.) सम ग्रहके राशिका हो तो अर्द्ध (३०क.) बल तथा शत्रु राशि का हो तो (१५ कला) चतुर्थांश बल होता है ॥ २९ ॥

उक्त बल शुभ ग्रहके लिये कहा गया है इससे विपरीत पाप ग्रहके बलको जानना चाहिये। अर्थात् पापग्रह शत्रुराशि का हो तो पूर्ण बल, समराशिका हो तो पादोन मित्र राशिका हो तो अर्धबल और यदि अपने राशि का हो तो चतुर्थांश बल होता है ॥ ३० ॥

अथ ग्रहाणां राशिभोगकालमाह—

भूवर्षं हि बृहस्पते र्निगदितं सार्द्धद्वयं भास्करेः।
पादं वासरयुग्ममर्क मृगतनोः पक्षत्रयं भूमिजे ॥ ३१ ॥
षड् विंशानि दिनानि दानवगुरो स्त्रींशि रात्रिं बुधे।
षड् मासं ससमामितं विधुरिपोर्मासं तथा भास्करे ॥ ३२ ॥

सं० टी०—अत्राचार्येण बालानां ग्रहसञ्चारज्ञानं झटिति यथा स्यात्तया मध्यगतिवशात्सत्प्रदर्शितम्। अत्र युक्तिः। तद्यथा। बृहस्पतेर्मध्यमगतिकलामानं सिद्धान्तजं ४।५९।९।९। अत्राल्पान्तराद्व्यवहारार्थं पञ्चकला मितं

तद्गतिकलामानं स्वीकृतम् । ततोऽनुपातादेकस्मिन् मासे तच्चलनं खबाणेन्दुमित कलात्मकं स्यात् ( १५० ) एतत्षष्टिभक्तं फलं भागात्मकं स्यादिति जातं सार्धद्विभागमितं । यद्येकमासेनेदं चलनं तदा द्वादशमासैः किमिति । फलमेकस्मिन्नपि वर्षे तच्चलनं स्यादिति रूपं ( २+३० ) १२=(२४+३६०)=३०+० । अतः सिद्धमेकस्मिन्नब्दे तच्चलनमेकराशिमित स्यात् । एवं स्वस्वमध्यमगतिवशादन्येषामपि योज्यम् । तद्यथा–शनेर्द्विवर्षं मासषट्कदेकराशिभोगमानम् । एवं मृगतनोश्चन्द्रस्य सपादं दिनद्वयम् । तथा मङ्गले सार्द्धैकमासमितम् ॥ ३१ ॥

तथा शुक्रस्य किन्तु तद्बुधस्य षड्विंशतिमितानि दिनानि । बुधे द्वाविंशरात्रि द्वाविंशतिमितं दिनम् । विधुरिपोः किन्तु राहो, ससमामितं षड्मासं सार्धैकवर्षं मितम् । तथा सूर्यस्यैकमासमितं इति राशि भोग कालः । अत उपपन्नं सर्वम् ॥ ३२ ॥

भा० टी० वृहस्पति मध्यम राशि के भोग से अर्थात् मध्यगति के हिसाब से प्रत्येक राशि में १ वर्ष रहते हैं ( यथा श्रीभास्कराचार्य ने भी लिखा है बृहस्पते र्मध्यम राशिभोगात् सम्वत्सरं साहितिका वदन्ति ) एवं शनि एक राशि में २॥ वर्ष, चन्द्रमा २। दिन, मंगल ३ तीन पक्ष शुक्र २६ दिन, बुध २१ दिन, राहु केतु १॥ वर्ष और सूर्य १ राशि में १ मास रहते हैं। बालकों के शीघ्र ग्रह सञ्चार के ज्ञान के लिये आचार्य ने मध्यगतिवश राशिभोग काल का ज्ञान लिखा है ॥ ३१ ॥ ३२ ॥

अथ ग्रहाणां शुद्धादि लक्षणमाह—

सूर्यं मुक्त्वा उदीयन्ते शीघ्राश्चार्के द्वितीयगे ।
समास्तृतीयगे ज्ञेया मन्दा भानौ चतुर्थगे ॥ ३३ ॥
वक्राः पञ्चमषष्ठेऽर्के स्वति वक्रा नगाष्टके ।
नवमे दशमे भानौ जायते कुटिलागतिः ॥ ३४ ॥
द्वादशैकादशे भानौ जायते शीघ्रतां पुनः ।
अदृश्यतां पुनर्लोपं प्रजन्त्यर्कयुता ग्रहाः ॥ ३५ ॥

सं० टी०—सूर्यमुक्ताः सूर्यसमयाः किन्तु सिद्धान्ते दस्रेन्दवः शैलभुवश्च (१७) शक्राः (१४) रुद्राः (११) सचन्द्राः (१०) तिथयः (१५) क्रमेण।

चन्द्रादितः काललवा निरुक्ता ज्ञशुक्रयोर्वक्रगयोर्द्विहीनाः।

इति पठिता ये स्वस्वसमयांशास्तदधिकैः सूर्यादन्तरिताः ये खेटास्ते चोदिताः स्युः। एवं येभ्यो ग्रहेभ्योऽर्के सूर्ये द्वितीयगे द्वितीयस्थानगते तदा ते खेटाः शीघ्राः शीघ्राख्याः। एवं येभ्यस्तृतीयगे भानौ सति ते खेटाः समाः समसञ्ज्ञका ज्ञेयाः। तथा येभ्यश्चतुर्थगे भानौ ते मन्दसंज्ञकाः ॥ ३३ ॥

तथा येभ्य पञ्चमषड्भे पञ्चमे षड्भेचार्के रवौ ते वक्राः वक्रसंज्ञकाः। तथा येभ्यो नगाष्टके सप्तमे चाष्टमे सूर्ये ते खेटा अतिवक्रा अतिवक्रसंज्ञकाः। एवं येभ्यो नवमे दशमे भानौ तेषां कुटिला गतिर्जायते। अर्थात्ते कुटिलगतिसंज्ञकाः ॥ ३४ ॥

एवं येभ्यो द्वादशे तथैकादशे भानौ तेषां गतिर्पुनः शीघ्रतां जायते किन्तु ते खेटाः शीघ्रगतिसंज्ञकाः स्युः। अर्कयुता ग्रहा ये ते चादृश्यतां पुनर्लोपं व्रजन्ति प्राप्नुवन्ति। अर्थात्सूर्यात्स्वस्वकालांशान्तर्गता ये खेटास्ते चादृश्यसंज्ञका लोपसंज्ञकाश्चेति। एते खेटानामुदयादिलक्षणं प्रदर्शितमिति ॥ ३५ ॥

भा० टी०—सूर्य से मुक्त ग्रह* उदय को प्राप्त है तथा जिस ग्रह से

---

* श्री भास्कराचार्य ने कालांश पठित किया है यथा "दस्रेन्दव १२ शैलभुवश्च १७ शक्रा १४ रुद्रा ११ सचन्द्रा १० तिथयः १५ क्रमेण। चन्द्रादित कालवा निरुक्ता ज्ञशुक्रयोर्वक्रगयो द्विहीनाः ॥ १ ॥

चन्द्रादि ग्रहों का क्रम से १२, १७, १४, ११, १०, १५ कालांश है तथा वक्री बुध का १२ शुक्र ८ कालांश है अर्थात् ये ग्रह जब सूर्य से अपने अपने अंश तुल्य अंश सूर्य से अधिक रहते हैं। तब उदित रहते हैं तथा पठित कालांश के अन्त-

सूर्य द्वितीय में वह ग्रह शीघ्र गति को प्राप्त होता है। जिस ग्रह से तीसरे सूर्य हों वह सम संज्ञक जिस से चतुर्थ में सूर्य हों वह मन्द संज्ञक होता है ॥ ३३ ॥

जिससे पञ्चम तथा षष्ठम में सूर्य हों वह वक्री तथा सप्तम अष्टम में सूर्य हो वह अतिवक्री और जिस से नवम दशम सूर्य हो वह कुटिल गति को प्राप्त होता है ॥ ३४ ॥

तथा जिस से एकादश तथा द्वादश स्थान में सूर्य हो वह फिर शीघ्रता को प्राप्त होता है पुनः सूर्य से संयुक्त ग्रह पुनः अस्तंगत हो जाते हैं ॥ ३५ ॥

अथ ग्रहाणां सौम्यासौम्य लक्षणमाह—

शन्यर्कराहुकेत्वाराः क्रूराः शेषाः शुभग्रहाः।
क्रूरयुक्तो बुधः क्रूरः क्षीणचन्द्रस्तथैव च ॥ ३६ ॥
क्रूरा वक्राः महत्क्रूराः सौम्याः वक्रा महच्छुभाः।
सहजाः स्यु स्वभावस्थाः सौम्याः क्रूराश्च शीघ्रगाः ॥ ३७ ॥
*स्वर्क्षोच्चगः स्वगेहेषु पूर्णवीर्यो भवेद्ग्रहः।
तदग्रपृष्ठगे खेटे बलं त्रैराशिकाद् भवेत् ॥ ३८ ॥

सं॰ टी॰—शनिरविराहुकेतुभौमाः क्रूराः पापग्रहाः स्युः शेषा बुधगुरुशुक्रपूर्णचन्द्राः सौम्याः शुभग्रहाः स्युः। यदि बुधः क्रूरयुक्तः पापस्तदैव ग्रह

गत रहते हैं तो अस्तङ्गत रहते हैं। जैसे जब कि चन्द्रमा सूर्य से १२ अंश से अधिक अंश तुल्य पीछे रहता है तब उदित, १२ अंश के अन्तर्गत होता है तो अस्त हो जाता है पुनः जब सूर्य का साथ कर १२ अंश से अधिक हो जाता है तब उदय को प्राप्त होता है। एवं सभी ग्रह अपने कालांश के अन्तर्गत रहने अस्तङ्गत तथा अधिक रहने पर उदित रहते हैं।

* स्वोच्चस्वगृहवर्गेषु इति पाठान्तरम्

संस्थितस्तदा पापः स्यात् । क्षीणचन्द्रः किन्तु कृष्णपक्षीयैकादशीमारभ्य शुक्लपञ्चमीं यावदिन्दुस्तथा स्यादर्थोत्पाप एव स्यात् ॥ ३६ ॥

सं० टी०—यदि क्रूरा प्रदर्शितपापखेटा वक्राः किन्तु पूर्वकथितवक्रलक्षणोपयुक्तस्तदा ते महत्क्रूरा अतिपापग्रहा स्युः । यदि सौम्या शुभग्रहा वक्रास्तदा ते महच्छुभा अतिशुभकारका स्युः । यदि स्वभावस्था' समाख्या खेटास्तदा सहजा सहजफलदाः स्वभाविकफलदा स्युः । यदि सौम्याः शुभग्रहा शीघ्रगा पूर्वविहितशीघ्रलक्षणलसितास्तदा ते क्रूराः पापफलदा स्युः । चशब्दोपादानात्क्रूरा पापग्रहा यदि शीघ्रगास्तदा ते सौम्या शुभफलदा स्युः ॥ ३७ ॥

यो ग्रहो वक्रोच्चगस्तथा स्वगेहेषु स्थितः स च पूर्णवीर्यः पूर्णबली भवेत् । तद्ग्रहणे कथितस्थानात्पूर्वापरस्थे खेटे सतित्रैराशिकादनुपाताद्बलं भवेत् । एतैः खेटानां क्रूरादिकलक्षणं प्रदर्शितम् ॥ ३८ ॥

भा० टी०—शनि सूर्य राहु केतु और मंगल ये पांच पाप ग्रह हैं शेष बुध बृहस्पति शुक्र और पूर्ण चन्द्र ये शुभ ग्रह हैं परन्तु बुध पाप ग्रहों के साथ से पापग्रह तथा क्षीण चन्द्रमा* भी पापग्रह होते हैं ॥ ३६ ॥

पाप ग्रह यदि वक्री हों तो अत्यन्त पापी तथा वक्री शुभ ग्रह अति शुभ ग्रह हो जाते हैं । पूर्वोक्त रीति से सम संज्ञक ग्रह सहज ही ( अर्थात् शुभ ग्रह शुभ पाप ग्रह पापी ही ) रह जाते हैं । तथा कथित प्रकार से शीघ्र संज्ञक शुभ ग्रह पापी तथा पाप ग्रह शुभ हो जाते हैं ॥ ३७ ॥

वक्री तथा उच्च राशि और निज राशि स्थित ग्रह † पूर्ण बली होते हैं इन स्थानों से आगे पीछे रहने वाले ग्रहों के बल का ज्ञान त्रैराशिक से करना चाहिये ॥ ३८ ॥

---

* क्षीणचन्द्र पूर्णचन्द्रयोर्लक्षणमाह वसिष्ठेन—

सपूर्णेन्दुमयाष्टम्यो मध्येन्दु पूर्ण संज्ञकः ।

विनष्टेन्दुमयाष्टम्यो मध्ये सौ क्षीण संज्ञकः ॥ १ ॥ गोविन्दशर्मा ।

सपूर्णेन्दु पूर्णिमा—

† शरवल्लभम्—उच्च राशौ निज मे च बलं नान्यैः हरिष्यते ।

कालस्यापि बहुत्वाच्च तस्मात्सोच्चेऽपि वक्रिते ॥ १ ॥ गोविन्दशर्मा ।

एवं शुभ पाप तथा वक्र मार्ग उच्च नीच आदि स्थानों द्वारा बल का अच्छी प्रकार ज्ञान करके फल कहना चाहिये ॥ ४२ ॥

यदि ग्रह वक्री हो तो फल को द्विगुणित करे, उच्च का हो तो त्रिगुणित शीघ्र संज्ञक हो तो स्वभावज और नीच राशि का हो तो अर्द्ध १/२ फल होता है ॥ ४३ ॥

अथ बालारिष्टस्य समय ज्ञानमाह—

सबलेऽत्र ग्रहे पापे दिनमात्रं विधीयते ।
मध्ये बले तथा मासो वर्षं चैवाबले तथा ॥ ४४ ॥
बलान्विते शुभे चापि वर्षं विद्याद्यथातथम् ।
मध्ये बले तथा मासं क्षीण चोर्ये तथा दिनम् ॥ ४५ ॥

सं०टी०—पापे ग्रहे वेधकारके पापग्रहे सबले पूर्णबले सति दिनमात्रं रिष्ट विधीयते वराहमिहिरादिभिः कथ्यते। तथा वेधकारके पापग्रहे मध्ये बले मध्यबले सति मासः किन्तु मासप्रमाणेन रिष्टं कथ्यते । तथा वेधकारके पापग्रहे चाबले बलरहिते सति वर्षं वर्षमानेन रिष्टं कथ्यते ॥ ४४ ॥

---

अनुपात—यदि ग्रह उच्च राशि से नीच राशि के अन्तर्गत हो तो यों बल जाना चाहिये कि उच्च नीचान्तर तुल्य १८० अंश में आधा बल पाते हैं तो उच्च करके रहित ग्रह तुल्य अंश में क्या । अब जो फल आवे उस रूप में से घटावे तो इष्ट स्थानीय बल होता है । तथा यदि नीच राशि से उच्च राशि के अन्तर्गत हो तो यों अनुपात करे कि नीचोच्चान्तर तुल्य १८० अंश में आधा बल पाते हैं तो नीचोन ग्रहान्तर तुल्य अंश में क्या । अब जो फल आवे उसे रूपार्द्ध में युक्त कर दे इष्टस्थानीय बल होता है ।

(१) $\frac{\text{१} \times \text{उच्चोन ग्रहान्तरांश}}{\text{२} \times \text{१८०}} = $ फलं, रूपोनं तदा बलं स्यात् ।

(२) $\frac{\text{१} \times \text{नीचोनग्रहान्तरांश}}{\text{२} \times \text{१८०}} = $ फलं, फलं रूपार्द्ध युक्तं बलं स्यात् ।

सं० टी०—वा अथवा वेधकारके शुभे शुभग्रहे सति यथातथं यथाङ्कमानेन वर्षं रिष्टं विधात् जानीयात् गणक इति शेषः। तथा वेधकारके शुभखेटे मध्ये बले समबले सति मासं मासमानेनारिष्टम्। तथा वेधकारके शुभखेटे क्षीणवीर्ये नष्टबले सति दिनं दिनमानेन रिष्टम्॥ ४५॥

भा० टी०—यदि वेध कारक पाप ग्रह बलवान् हों तो वेध कारक पाप ग्रह जिस राशि में स्थित हों तो तद्गत एकोन विंशतिः कर्के इत्यादि के अनुसार तद्राशिगत अंक तुल्य दिन पर बालारिष्ट कहना चाहिये। एवं पाप ग्रह यदि मध्य बली हो तो कथित प्रकार से ग्रहगतांक तुल्य मास पर बालारिष्ट कहना चाहिये एवं दुर्बल हों तो वेधकारक पापग्रहगतांक तुल्य वर्ष पर बालारिष्ट कहना चाहिये॥ ४४॥

यदि वेध कारक शुभ ग्रह बलवान् हों तो शुभग्रहगतांक तुल्य वर्ष पर, मध्य बली हों तो तद्राशि गतांक तुल्य मास पर और क्षीण बल हों तो तद्राशि गतांक तुल्य दिन पर बालारिष्ट कहना चाहिये॥ ४५॥

अथ जन्मलग्नवशेन बालारिष्टमाह—

पापग्रहयुते लग्ने युते वा शत्रुवीक्षिते।
तदा दिनं भवेत्तस्य मरणाय सुनिश्चितम्॥ ४६॥

सं० टी०—जन्मलग्ने पापग्रहयुते शत्रुणा युते वा दृष्टे सति तदा तस्य बालस्य दिनं तदङ्कमानेन दिनं मरणाय सुनिश्चितमिति॥ ४६॥

भा० टी०—यदि त्रिपताकि चक्र में जन्म लग्न पाप ग्रह से अथवा शत्रु से युक्त या दृष्ट हो तो जन्म लग्न गतांक तुल्य दिन पर बालक की मृत्यु होती है॥ ४६॥

तुल्यदृष्टिद्वयोर्वापि तुल्य योगो भवेद्यदि।
तदा मासं विधातव्यं ग्रहाणां च बलाबलम्॥ ४७॥

सं० टी०—यदि जन्मलग्ने द्वयोः शुभाशुभखेटयोस्तुल्या दृष्टिः स्यात्। वा तत्र तुल्यशुभाशुभयोर्योगः किन्तु जन्मलग्ने शुभाशुभयोर्योगे समता भवेत्। तदा ग्रहाणां बलाबलमेवावगम्य मासं मासप्रमाणेनाङ्कतुल्येन रिष्टं विधातव्यं शेष-

मिति प्रत्रेदमवधेयम् । शुभग्रहे बलवति सति पापखेटे बलरहिते सति तदा मासो ज्ञेयः। अन्यथा दिनानि । तथोक्तमन्यत्र "असदृग्रहयोर्बलक्षणादैर्दिनानि विमिश्रेण मासा बलात्तारतम्यमिति ॥ ४७ ॥

भा० टी०—यदि जन्म लग्न शुभ तथा पापग्रह दोनों से तुल्य दृष्ट हो अथवा शुभाशुभ ग्रहों से युक्त हो तो जन्मलग्न गत अंक तुल्य मास पर बालारिष्ट कहे । उसमें भी यदि शुभ ग्रह अधिक बलवान् हो तो मास संख्या तथा यदि पाप ग्रह अधिक बलवान् हो तो तत्संख्या तुल्य दिन पर ही अरिष्ट को कहे ॥ ४७ ॥

शुभदृष्टे शुभयुते शुभस्थानस्थितेऽपि या ।
तदा वर्षे विजानीयात्स्वामिना दृश्यते यदि ॥ ४८ ॥

स० टी०—जन्म लग्ने शुभग्रहवेधे सति शुभैर्दृष्टयुते सति वा पुनरपि शुभस्थानस्थिते शुभग्रहस्य राशौ प्राप्ते सति तदा वर्षे तदङ्कमानेन रिष्टं विजानीयाद्गणक इति शेषः । अथवा शुभग्रह वेधेसति जन्मलग्ने स्वस्वामिना युते दृष्टे सति तथैव वर्षे बोध्यम् । तथोक्तमन्यत्रापि शुभस्थानयोगेक्षणाद्यैः समास्तु ॥ ४८ ॥

भा० टी०—यदि जन्मलग्न शुभ ग्रहसे विद्ध हो तथा शुभ ग्रहसे दृष्ट युक्त हो अथवा जन्मलग्न शुभ ग्रहकी राशि हो तो लग्न गतांक के तुल्य वर्ष पर बालारिष्ट कहना चाहिये । अथवा यदि जन्मलग्न शुभ ग्रहसे विद्ध हो तथा यदि अपने स्वामि से दृष्ट हो तो लग्न गत तुल्याङ्क वर्ष पर बालारिष्ट कहना चाहिये ॥ ४८ ॥

अथान्य प्रकारेणारिष्टमाह—

अशुभे दृष्टसंयोगे क्षीणे पापयुते यदि ।
शुभ ग्रहाः प्रपश्यन्ति तत्र वर्षाणि योजयेत् ॥ ४९ ॥

सं० टी०—यदा दृष्टेऽशुभखेटे सति तथापुनः क्षीणे नीचारिभगतबला-द्युपरहिते सति तथा जन्मलग्ने पापग्रहयुते सति दिनानि । तत्र यदि बलवन्तः शुभखेटा जन्मलग्नं प्रपश्यन्ति तदा वर्षाणि तदङ्कतुल्यवर्षमानेनारिष्टं बोध्यमेवमर्थमाह ॥ ४९ ॥

भा० टी०—यदि जन्मलग्न वक्ष्यमाण रीति से पाप दण्डेश से युक्त हो तथा दण्डेश बलहीन हो और जन्म लग्न पाप ग्रहसे युक्त हो ऐसी उपस्थिति में यदि बलवान् शुभ ग्रह जन्म लग्नको देखते हों तो वहाँ पर जन्मलग्न गत अङ्क तुल्यवर्ष में अरिष्ट जाने ॥ ४९ ॥

> वर्गोत्तमे स्वतुङ्गे वा केन्द्रे च गुरु भार्गवौ ।
> तथापि प्रबले पापे वर्षं मासो न लभ्यते ॥ ५० ॥

सं० टी०—यदि गुरुभार्गवौ वर्गोत्तमे वर्गोत्तमाख्ये नवांशे । वा स्वतुङ्गे निजोच्चे स्थितौ सन्तौ केन्द्रेऽपि भवेतां तथापि पापे वेधकारकपापग्रहे प्रबले बलाधिक्ये सति तदा वर्षमासो न लभ्यते वर्षमानेनरिष्टं न जायते किन्तु दिनप्रमाणेन रिष्टं बोध्यम् ॥ ५० ॥

भा० टी०—यदि बृहस्पति शुक्र दोनों वर्गोत्तम नवांश में स्थित होकर वा निजोच्च में स्थित होकर केन्द्र में हों तो भी यदि वेध कारक पाप ग्रह बलवान् हों तो ऐसी स्थिति में मासाङ्क तुल्य वर्ष न कह करके तत्तुल्य दिन प्रमाण ही अरिष्ट के लिये कहना चाहिये ॥ ५० ॥

स्वमतं चाह—

> विद्धे ऋक्षत्रितयस्थै र्दिनमात्रं विधीयते ।
> एतदुक्तं मम मतं शिशोरिष्ट च सर्वदा ॥ ५१ ॥

सं० टी०—यदि जन्मलग्ने ऋक्षत्रितयस्थैः किन्तु राशित्रयगतैर्ग्रहैर्विद्धे सति तदा दिनमात्रं रिष्टं विधीयते । एतन्मम मतं यदुक्तं तत्सर्वदा शिशोर्बालस्य रिष्टं ज्ञेयम् ॥ ५१ ॥

भा० टी०—ग्रन्थकार का यह मत है कि यदि जन्म लग्न तीनों राशिगत ग्रह से विद्ध हो तो तद्गताङ्क तुल्य दिन पर अरिष्ट कहना चाहिये । अर्थात् यदि राशित्रय गत ग्रहों से विद्ध होगा तो अवश्य तद्गताङ्क दिन पर अरिष्ट होगा ॥ ५१ ॥

शुभ लक्षणमाह—

शुभे च दण्ड संयोगे सर्वथा पाप वर्जिते।
बालस्य कुशलं सर्वं शुभे यदि युतेक्षिते ॥ ५२ ॥

सं० टी०—अनेन दण्डेशार्धयामेशयोर्वेधफलं दर्शितम्। यथा। वक्ष्यमाणविधिना दण्डेशे शुभग्रहे सति तथा सर्वथा वेधार्धयामेशयोर्मध्ये पापवर्जिते पापखेटसम्बन्धाभावे सति पुनर्यदि जन्मलग्ने शुभग्रहैर्युतेक्षिते सति तदा बालस्य सर्वं सर्वथा कुशलं कल्याणं कथयेत् न चारिष्टमित्यर्थः ॥ ५२ ॥

भा० टी०—यदि वक्ष्यमाण विधि से दण्डेश ग्रह हों तथा जन्म लग्न किसी पापग्रह से विद्ध न हो वक्ष्यमाण रीति से अर्धयामेश भी पापग्रह न हो एवं सर्वथा पाप ग्रह का अभाव हो ऐसी स्थिति में जन्म लग्न यदि शुभ ग्रह से युक्त दृष्ट हो तो बालक के लिये निरन्तर कुशल (कल्याण) कहना चाहिये ॥ ५२ ॥

अशुभ लक्षणमाह—

अशुभे दण्ड संयोगे सर्वत्र शुभवर्जिते।
बालस्य मरणं शीघ्रं यदि पापै र्युतेक्षिते ॥ ५३ ॥

सं० टी०—अत्रापि दण्डेशार्धयामेशयोः सम्बन्धात्फलमुक्तम्। तद्यथा। अशुभे पापग्रहे दण्डाधिपे सति तथा सर्वत्रेति पदबलाद्वेधार्धयामेशयोर्मध्ये शुभवर्जिते शुभखेटसम्बन्धाभावे सति किन्तु तद्द्वयं पापग्रहाणामेवास्ति तथा जन्मलग्ने पापैर्युतेक्षिते सति तदा बालस्य शीघ्रं मरणं स्यात्। अत्रेदमवधेयम् दण्डेशस्य पापाभावे रिष्टमात्रं नच मरणम्। तथोक्तमन्यत्र।

पापार्धप्रहरे जन्म पापदण्डेऽथवा पुनः।
लग्ने पापे यदा जातस्तदा मृत्युर्न संशयः ॥ ५३ ॥

भा० टी०—वक्ष्यमाण विधि से दण्डेश पाप ग्रह हो सभी जगह शुभ ग्रह का अभाव हो (अर्थात् वेध कारक ग्रह तथा अर्धयामेश ये भी शुभ ग्रह

न हों ) ऐसी स्थिति में यदि जन्म लग्न पाप ग्रह से युक्त दृष्ट हो तो अति शीघ्र ही बालक की मृत्यु होती है ॥ ५३ ॥

अथार्धयामेशानाह—

दिवा षट्क क्रमेणैव रात्रौ पञ्चक्रमेण च ।
वारेशादर्धयामानां पतयः कीर्तिताः बुधैः ॥ ५४ ॥

सं० टी०—दिवा दिने षट्कक्रमेण षट्सङ्ख्या परिवर्तनेनाऽर्धयामाधिपाः । रात्रौपञ्चक्रमेण पञ्चसङ्ख्यापरिवर्तनेन चार्धप्रहरेशाः स्युः । इत्येवं बुधैर्वारेशा-द्वारेशमारभ्यार्धयामानां पतयः कीर्तिता । अत्रेदमवधेयम् । यस्मिन् दिनेऽर्धयामेशस्य ज्ञानमभीष्टं तद्दिने दिनमानमष्टधाविभज्य प्रथमखण्डस्याधिपं तद्दिनेशं कृत्वा तस्मादिनेशात्षष्ठग्रहं द्वितीयखण्डाधिपं ततो द्वितीयखण्डेशात्पुनः षष्ठग्रहं तृतीयखण्डाधिपं जानीयादेवमग्रेपीष्टदण्डं यावदिति । तद्यथा । रविदिने प्रथमार्धयामेशो वारेशरूपो रविरेव तस्मात्षष्ठःशुक्रः स च द्वितीयार्धयामेशः । एवं तृतीयेशो बुधः ३ । चतुर्थेशश्चन्द्रः ४ । पञ्चमार्धयामस्य पतिः शनिः । ततः षष्ठेशो गुरुः । सप्तमार्धयामाधिपतिः कुजः । अष्टमाधिपतिः पुनर्वारेशः सूर्य एव । एवमन्यवारेषु बोध्यम् ।

अथ रात्रावपि प्रथमार्धयामेशं वारेशं कृत्वा ततस्तस्माद्वारेशात्पञ्चमोग्रहो द्वितीयार्धयामाधिपतिः । एवं ततस्ततः पञ्चसङ्ख्यया तृतीयाद्यर्धयामानां पतयः स्युः । तद्यथा । रविरात्रावाद्यर्धयामेशो रविः । १ । ततो द्वितीयस्य पतिर्गुरुः । २ । तृतीयस्येन्दुः । ३ । चतुर्थस्य शुक्रः । ४ । पञ्चमस्य मङ्गलः । ५ । षष्ठस्य शनिः । ६ । सप्तमस्य बुधः । ७ । अष्टमस्य सूर्यः । एवमन्यवाराणामपि रात्रिषु बोध्यम् ॥ ५४ ॥

भा० टी०–दिनमें आठ अर्द्ध प्रहर होते हैं एवं रात्रिमें भी आठ अर्द्ध प्रहर होते हैं । दिनमें यदि अर्द्धयामेश जानना हो तो प्रथम अर्द्ध प्रहर दिवसाधिपति का होता है द्वितीय उससे षष्ट ग्रहका एवं तृतीयादि का भी विचार करना चाहिये । यथा रविवार को दिनमें प्रथमार्द्धयामेश सूर्य द्वितीय शुक्र तृतीय बुध चतुर्थ चन्द, पञ्चम शनि,षष्ठ बृहस्पति सप्तम मंगल अष्टम पुनः सूर्य

अर्द्धयामेश होते हैं । तथा रात्रिमें पञ्चम २ ग्रहके -परिवर्तन से अर्द्ध यामेश होते हैं ।

यथा रविवार के रात्रि में १ सूर्य २ बृ० ३ चं० ४ शु० ५ मं० ६ श० ७ बु० ८ सू० अर्द्धयामेश हुए अतएव अर्धयामेशों के सुगम ज्ञान के लिये अधो लिखित चक्र नं० १ नं० २ देखिये ।

( १ )

दिवार्धयामेश चक्रम् ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | सू | चं | मं | बु | बृ | शु | श |
| २ | शु | श | र | चं | मं | बु | बृ |
| ३ | बु | बृ | शु | श | र | च | मं |
| ४ | चं | मं | बु | बृ | शु | श | र |
| ५ | श | र | चं | मं | बु | बृ | शु |
| ६ | बृ | शु | श | र | चं | मं | बु |
| ७ | मं | बु | बृ | शु | श | र | चं |
| ८ | सू | चं | मं | बु | बृ | शु | श |

( २ )

रात्र्यावर्धयामेश चक्रम् ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | सू | चं | मं | बु | बृ | शु | श |
| २ | बृ | शु | श | र | चं | मं | बु |
| ३ | चं | मं | बु | बृ | शु | श | र |
| ४ | शु | श | र | चं | म | बु | बृ |
| ५ | मं | बु | बृ | शु | श | र | चं |
| ६ | श | र | चं | म | बु | बृ | शु |
| ७ | बु | बृ | शु | श | र | चं | मं |
| ८ | सू | च | मं | बु | बृ | शु | श |

अर्धयामेशान् स्पष्टयति—

अर्कः शुक्रो बुधश्चन्द्रो मन्दो जीवः कुजो रविः ।

अर्कः जीवः शशी शुक्रः कुजो मन्दो बुधो रविः ॥ ५१ ॥

भा० टी०—पूर्व श्लोक में वारेश से "दिवा षट्क रात्रौ पञ्च क्रमेण" अर्धयामेश को कहे है उसी को स्पष्ट कर देते हैं कि दिन में वारेश से सू० शु० बु० चं० श० बृ० मं० र० और रात्रि में वारेश से सू० बृ० चं० शु० मं० श० बु० सू० के क्रम से अर्धयामेश होते हैं ॥ ५५ ॥

अथ दिवा दण्डेशानाह—

दिवा यामार्धपस्त्वाद्यो दण्डेशः परिकीर्तितः ।
प्रोक्ता ग्रहाः क्रमेणात्र चत्वारो दण्डनायकाः ॥ ५६ ॥

सं० टी०—दिवा दिने यस्मिन्नर्धयामे दण्डेशस्य ज्ञानमभिमतं तदाऽऽद्यो दण्डेशास्त्वर्धयामाधिप एव परिकीर्तितः । ततः क्रमेणार्धाद्वक्ष्यमाणार्धार्धरीत्या चैवं चत्वारो दण्डनायका दण्डेशाः प्रोक्ताः कथिता गणकेनेति शेषः ।

अत्रेदमवधेयम् । दिने यामीष्टार्धयामप्रमाणस्यचत्वारो भागा विधेयाः । तेषां विभागानां दण्डाख्या ग्रन्थे कथिता इति । तत्रार्धयामेशो यः स एवाद्यो दण्डेशः । तदर्धतुल्यग्रहो द्वितीयभागस्य दण्डाभिधस्येशः । पुनस्तदर्द्धं तृतीयस्येशः । पुनस्तदर्द्धं चतुर्थेशः । तद्यथा । रविदिने प्रथमार्धयामेशो रविरेव स चाद्यो दण्डेशश्च । तदर्धपरि मितो राहुर्द्वितीयदण्डेशः । पुनस्त-स्तद्भ्यार्धसमा बुधस्तृतीयेश । पुनस्तद्दलेन द्विकेन समश्चन्द्रश्चतुर्थद-ण्डेपः । एवं सर्वेषामर्धयामानां प्रमाणं चतुर्धा विभज्यार्धार्धक्रमरीत्या दण्डेश्वरो बोध्यः ॥ ५६ ॥

भा० टी०—दिन में जिस अर्धयाम में दण्डेश ज्ञान अभिमत हो उस में प्रथम दण्डेश अर्धयामेश ही होता है तथा द्वितीय, तृतीय, चतुर्थ दण्डेश वक्ष्य-माण प्रकार से अर्ध २ क्रम से जो ग्रह कहे गये हैं वे होते हैं । एवं प्रत्येक अर्धयाम में चार दण्डेश होते हैं । यथा रविवार को प्रथम अर्धयाम में प्रथम दण्डेश रवि, द्वितीय दण्डेश वक्ष्यमाण रवेरर्धं भवेद्राहु के रीति से राहु तृतीय दण्डेश राहोरर्धं बुधस्तथा से बुध चतुर्थ दण्डेश बुधस्यार्धं शशी ज्ञेयः से शशि हुआ एवं सभी अर्धयामों में दण्डेश का आनयन करना चाहिये ॥ ५६ ॥

दिने दण्डेशानां क्रममाह—

रवेरर्धे भवेद्राहू राहो रर्धे बुधस्तथा।
बुधस्यार्धे शशी ज्ञेय श्चन्द्रस्यार्धे दिवामणिः॥ ५७॥
भौमस्यार्धे तथा सूर्यो गुरोरर्धे हि चन्द्रमा।
शुक्रस्यार्धे कुजो ज्ञेयः शनेरर्धे तथैव च॥ ५८॥

सं० टी०—अत्र यदा सावयवा सङ्ख्या स्यात्तदा तदवयवमपहाय पूर्णसङ्ख्या ग्राह्या। तथा शून्यस्थलेराहुः। एवं राहुचन्द्रयामार्धे कर्तव्ये चाष्टसङ्ख्यायामार्धं विधेयं यतो राहुरष्टमो ग्रहः॥ ५७॥ ५८॥

भा० टी०—रवि का अर्ध राहु, राहु का अर्ध बुध, बुध का अर्ध चन्द्रमा चन्द्रमा का अर्ध सूर्य होता है। तथा मंगल का अर्ध सूर्य, गुरुका अर्ध चन्द्रमा शुक्र का अर्ध मंगल और शनि का भी अर्ध मंगल होता है इसी अर्धार्ध के क्रम से प्रत्येक अर्धयाम में दण्डेश होते हैं जिस को ग्रन्थकार ने भी अग्रिम श्लोक "रवि शिखि बुध चन्द्रा" इत्यादि स्पष्ट से स्पष्ट दिखाया है॥ ५७॥ ५८॥

अथ दिने दण्डेशान् सङ्कयति—

रविशिखिबुधचन्द्राश्चन्द्रसूर्यासुरज्ञाः
कुजरविदनुजज्ञा श्चेन्दुसूर्यासुराश्च।
गुरुशशिरविदैत्याः शुक्रभौमार्कदैत्याः।
शनिकुजरविदैत्याः स्युर्दिवा दण्डपालाः॥ ५९॥

सं० टी०—अत्र रवेरर्धयामे रव्यादिचन्द्रान्ता। एव चन्द्रार्धयामे चन्द्रादिबुधान्ताः। कुजार्धयामेकुजादि बुधावधिकाः। बुधार्धप्रहरे बुधादिराहुन्ताः। गुरुवारे गुर्वादिराहुग्रहावधिकाः। शुक्रार्धयामे शुक्रादिराहुं यावत्। एवं शनिवारे शनिमारभ्य राहुमहं यावत्। इत्येवं दिने दण्डेश्वराः स्युः॥ ५९॥

भा० टी०—यदि दिन में दण्डेश का ज्ञान का अभिमत हो तो सूर्य के अर्धयाम मे प्रथम दण्डेश सूर्य द्वितीय दण्डेश राहु तृतीय दण्डेश बुध चतुर्थ दण्डेश चन्द्रमा होते हैं चन्द्रमा के अर्धयाम में प्रथम दण्डेश चन्द्रमा द्वितीय सूर्य तृतीय राहु और चतुर्थ दण्डेश बुध, बुध के अर्धयाम में बुध चन्द्रमा सूर्य राहु और बृहस्पति के अर्धयाम में बृहस्पति चन्द्रमा सूर्य राहु, शुक्र के अर्धयाम शुक्र मंगल सूर्य राहु और शनि के अर्धयाम में क्रमशः, शनि मंगल सूर्य राहु दण्डेश्वर होते हैं ॥ ५९ ॥



सूर्यवासरे

| अ. | प्र. द. | द्वि. द. | तृ. द. | च. द. |
|---|---|---|---|---|
| १ | सू. | रा. | बु. | चं. |
| २ | शु. | मं. | सू. | रा. |
| ३ | बु. | चं. | सू. | रा. |
| ४ | चं. | सू. | रा. | बु. |
| ५ | श. | मं. | सू. | रा. |
| ६ | बृ. | चं. | सू. | रा. |
| ७ | मं. | सू. | रा. | बु |
| ८ | सू. | रा. | बु. | चं. |

चन्द्रवासरे

| अ. | प्र. द. | द्वि. द. | तृ. द. | च. द. |
|---|---|---|---|---|
| १ | चं. | सू. | रा. | बु. |
| २ | श. | मं. | सू. | रा. |
| ३ | बु | चं. | सू | रा. |
| ४ | मं. | सू. | रा. | बु. |
| ५ | सू | रा. | बु. | चं. |
| ६ | शु. | मं. | र. | रा. |
| ७ | बु. | चं. | र. | रा. |
| ८ | चं. | सू. | रा. | बु. |

भोमादने

| अ. | प्र. द. | द्वि. द. | तृ. द. | च. द. |
|---|---|---|---|---|
| १ | मं. | सू. | रा. | बु. |
| २ | सू. | रा. | बु. | चं. |
| ३ | शु. | मं. | र | रा. |
| ४ | बु. | चं. | सू. | रा. |
| ५ | चं. | सू. | रा. | बु |
| ६ | श. | मं. | र. | रा |
| ७ | बु. | चं. | सू. | रा. |
| ८ | मं. | सू. | रा. | बु. |

बुध दिने

| अ. | प्र. द. १ | द्वि. द. २ | तृ. यं. ३ | च. द. ४ |
|---|---|---|---|---|
| १ | भु. | घं. | र. | रा. |
| २ | घ. | र. | रा. | भु. |
| ३ | रा. | मं. | र | रा. |
| ४ | भु. | घं. | र. | रा. |
| ५ | मं. | र. | रा. | भु. |
| ६ | र. | रा. | भु. | घं. |
| ७ | रा. | मं. | र. | रा. |
| ८ | भु. | घं. | र. | रा. |

शुक्र दिने

| अ. | प्र. द. | द्वि. द. | तृ. द. | च. द. |
|---|---|---|---|---|
| १ | भु. | घं. | र. | रा. |
| २ | मं. | र. | रा. | भु |
| ३ | र. | रा. | भु. | घं. |
| ४ | रा. | मं. | र | रा. |
| ५ | भु | घ. | र. | रा. |
| ६ | घं. | र. | रा. | भु |
| ७ | रा. | मं. | र. | रा. |
| ८ | भु. | घं. | र. | रा. |

शुभयामरे

| अ | प्र. द. | द्वि. द. | तृ. द. | च. द. |
|---|---|---|---|---|
| १ | रा | मं. | र. | रा |
| २ | भु. | घं. | र. | रा |
| ३ | मं. | र. | रा. | भु. |
| ४ | रा. | मं | र. | रा. |
| ५ | भु. | घं. | मृ. | रा. |
| ६ | मं | र. | रा. | भु. |
| ७ | र. | रा. | भु. | घं |
| ८ | रा | मं. | मृ. | रा |

शनियामरे

| अ. | प्र. द. | द्वि. द. | तृ. द. | च. द. |
|---|---|---|---|---|
| १ | रा. | मं. | र. | रा. |
| २ | भु | घं. | मृ. | रा. |
| ३ | मं. | र. | रा. | भु. |
| ४ | र. | रा. | भु. | घं. |
| ५ | रा. | म. | मृ. | रा |
| ६ | भु. | घं. | र. | रा. |
| ७ | घं. | र. | रा. | भु |
| ८ | रा. | मं. | र. | रा |

अथ दिनरात्र्योर्दण्डेशानाह—

दिवार्धं प्रक्रमेणैव यामार्धेशाच्च दण्डपाः।

रात्रौ षट् क्रमेणैव तदीशा यामखण्डपात् ॥ ६० ॥

सं० टी०—अत्र पूर्वार्धेन दिने दण्डेशाः प्रदर्शिताः। तस्यार्थस्तु पूर्वमेव प्रस्फुटः कृत। अथोत्तरार्धं व्याख्यायते। रात्रौ यामखण्डपादर्धयामेशादारभ्य षट्क्रमेण षट्परिवर्तनवशेन तदीशा दण्डपा स्युः।

अत्रेदमवधेयम्। रात्रावपि यस्मिन् यामार्धे दण्डेश्वरोऽभीष्टस्तदार्धयामस्या-द्यचतुर्थांशस्य दण्डाख्यस्य पतिरर्धयामेश एव। ततः षष्ठोग्रहो द्वितीयदण्डेशः। पुनस्तस्मात्षष्ठस्तृतीयदण्डेशः। एवं ततः षष्ठश्चतुर्थदण्डेशो बोध्यः।

तथोक्तं स्वरचक्रशिखायाम्—

"दिवार्धप्रक्रमेणैव ज्ञेया दण्डेश्वरा बुधै।
निशियामार्धपात्षष्ठः षष्ठः क्षणदलेश्वरः ॥"

तद्यथा। रात्रौ रवियामार्धदण्डेश्वराणां परामर्शे कर्तव्ये प्रथमदण्डेशो यामार्धेशरूपो रविरेव। तस्मात्षष्ठग्रहः शुक्रो द्वितीयदण्डेशः। ततः षष्ठो बुधस्तृतीयदण्डाधीशः। तत्षष्ठश्चन्द्रश्चतुर्थदण्डप। एवमन्यार्धयामेष्वपि विभाव्यम् ॥ ६० ॥

भा० टी०—दिन में दिवार्ध प्रक्रम से दण्डेश होते हैं जिसका अर्थ पूर्व में ही कर दिया हूं। उत्तरार्ध का अर्थ कहता हूं रात्रि में अर्धयामेश से षष्ठषष्ठ ग्रहके क्रमसे दण्डेश जानना चाहिये अर्थात् रात्रि में जिस अर्ध-याममें दण्डेश ज्ञान करना है उसमें अर्धयामेश ही प्रथम दण्डेश होता है तथा अर्धयामेश से छठवां ग्रह द्वितीय दण्डेश, द्वितीय दण्डेश से षष्ठम ग्रह तृतीय दण्डेश, तृतीय दण्डेश से षष्ठम ग्रह चतुर्थ दण्डेश होता है। यथा रात्रि में रवि के अर्धयाम में दण्डेश ज्ञान करना है तो सूर्य ही प्रथम दण्डेश हुआ। सूर्य से षष्ट शुक्र द्वितीय दण्डेश, शुक्र से षष्ट बुध तृतीय दण्डेश और बुध से षष्ट चन्द्रमा चतुर्थ दण्डेश हुआ एवं रात्रि में दण्डेश्वर का ज्ञान करना चाहिये ॥ ६० ॥

## द्विसप्तति दिनात्मके मासेऽन्तरभोग चक्रम् ।

| अ | इ | उ | ए | ओ | पञ्चस्वरा |
|---|---|---|---|---|---|
| १४ | १४ | १४ | १४ | १४ | दिनानि |
| २४ | २४ | २४ | २४ | २४ | घटी |

## अथान्तर्दशा फलानि ।

उदितादित्रिके चेत्स्यादन्योन्यं भाग संस्थितम् ।
तदा शुभ विजानीयात् मध्य सन्ध्यादि संस्थितम् ॥ ७१ ॥
अन्योन्यभागसंस्थं चेत्सन्ध्यास्तेऽरिभय भवेत् ।
तदा क्लेश विजानीयादुदितादित्रिके समम् ॥ ७२ ॥

उदितादित्रिकमर्थादुदितस्वरस्तथा भ्रमितस्वरस्तथा भ्रान्तस्वर इतिस्वरत्रिक चेद्यदन्योन्य परस्पर भागसंस्थितमर्थादुदितस्वरे कथितत्रिकम् । अथवा भ्रमित स्वरे कथितत्रिकम् । अथवा भ्रान्तस्वरे कथितत्रिकस्यात्तदा शुभ राज्यादिकं विजानीयात् । चेद्युक्त त्रिक सन्ध्यादि संस्थितं सन्ध्यास्ते स्वरद्वये स्यात्तदा मध्य स्यात् ॥ ७२ ॥

सन्ध्यास्ते स्वरद्वये चेदन्योन्यभागसंस्थमर्थात्सन्ध्यास्वरे सन्ध्यास्तस्वरयो र्भोगकाल । अथवाऽस्तेऽस्तस्वरे सन्ध्यास्तस्वरयोर्भोगसंस्थं तदाऽरिभय तथा क्लेशं महत्कष्ट विजानीयात् । उदितत्रिके चेद्यदि सन्ध्यास्तभोगसंस्थं तदासम मध्य फल स्यात् ॥ ७२ ॥

भा० टी०—उदितादि तीनों स्वरों की परस्पर अन्तर दशायें शुभ फल कारक होती हैं । ( अर्थात् उदित स्वर में उदित भ्रमित और भ्रान्त स्वर की अन्तर दशा तथा भ्रमित स्वर में भ्रमित भ्रान्त तथा उदित स्वर की अन्तर दशा एवं भ्रान्त स्वर में उदित भ्रमित भ्रान्त की अन्तरदशा शुभ फल कारक होती है ) तथा सन्ध्या और अस्त स्वरमें उदितादि तीनों स्वरों की अन्तर्दशायें मध्यम फल देने वाली होती हैं ॥ ७१ ॥

एव सन्ध्या और अस्त स्वरकी परस्पर अन्तर्दशा शत्रुके भय और क्लेश को देती है । तथा उदितादि तीनों स्वर में संध्या और अस्त स्वर की अन्तर दशा फल सम होता है ॥ ७२ ॥

अथ नक्षत्रस्वरमाह—

> अकारे सप्त ऋक्षाणि रेवत्यादि क्रमेण च ।
> पञ्च पञ्च इकाराद्यावेयमृक्षस्वरोदयः ॥ ७३ ॥

रेवत्यादिक्रमेण रेवतीनक्षत्रमारभ्य सप्त ऋक्षाणि अकारे अकारस्वराधःस्थानि देयानि । ततः पञ्च पञ्च नक्षत्राणीकारादौ स्थाप्यानि एवमृक्षस्वरोदयो भवेत् ॥ ७३ ॥

भा॰ टी॰—अ स्वर के अध. स्थान में रेवती अ॰ भ॰ कृ॰ रो॰ मृ॰ आर्द्रा सात नक्षत्रों को इ स्वर के नीचे पुन॰ पु॰ आ॰म॰ पू॰ फा॰, उ स्वर के अध स्थान में उ॰ फा॰ हस्त चि॰ स्वा॰ वि॰, ए स्वर के अधः स्थान में अनु॰ ज्ये॰ मू॰ पू॰ षा॰ उ॰ षा॰ और ओ स्वर के अध स्थान में श्र॰ ध॰ श॰ पू॰ भा॰ उ॰ भा इन नक्षत्रों को स्थापित करें ॥ ७३ ॥

## नक्षत्रस्वर चक्रम् ।

| अ. | इ. | उ. | ए. | ओ. | पञ्चस्वरा |
|---|---|---|---|---|---|
| रे. | पुन. | उ.फा. | अनु. | श्र. | नक्षत्राणि |
| अ | पु. | ह. | ज्ये. | ध. | ,, ,, |
| भ. | आश्ले | चि. | मू. | श | ,, ,, |
| कृ. रो. | म. | स्वा. | पू.षा. | पू.भा | ,, ,, |
| मृ.आ. | पू फा. | वि. | उ. षा. | उ.भा. | ,, ,, |

अथ राशिस्वरमाह—

अकारे मेष सिंहालि इस्त्रीमिथुनकर्कटाः।
उस्वरे चापमीनौ च एकारेच तुला वृषौ ॥ ७४ ॥
ओस्वरे मृग कुम्भौ च राशीशाद्वार निश्चयः।
स्वराधः स्थापयेत् खेटान् राशौ योयस्य नायकः ॥ ७५ ॥

अकारे मेषसिंहालिः। इकारे स्त्रीमिथुनकर्कटौ। उस्वरे चापमीनौ। एकारे तुलावृषौ ॥ ७४ ॥

ओकारे मृगकुम्भौ। अत्र राशीशाद्वारनिर्णयःकार्यः। तदेव स्पष्टयति यस्य राशेर्यो ग्रह.कथितविधिना नायकः स्वामी स्यात्। एवंतान् खेटान् स्वराध स्थापयेत् ॥ ७५ ॥

मेष सिंह वृश्चिक अ स्वर, कन्या मिथुन कर्क राशि इ स्वर, धन मीन उ स्वर, तुला वृष ए स्वर एवं मकर कुम्भराशि ओ स्वर है। राशीश से वार का निश्चय करना चाहिये अर्थात् जिस राशि का जो स्वामी हो उस ग्रह को उस राशि के अध. स्थान में लिखे ( यथा अ स्वर के अध स्थान में सूर्यवार मंगलवार, इ स्वर स्थान में चन्द्रवार, बुधवार, उ स्वर, में गुरुवार, ए स्वर में शुक्रवार और ओ स्वर मे शनिवार को स्थापन करे ॥ ७४ ॥ ७५ ॥

राशिस्वर ग्रहस्वर।

| अ | इ | उ | ए | ओ | पञ्चस्वराः |
|---|---|---|---|---|---|
| मे. | कन्या | ध. | तु. | मं. | राशिः |
| सिं. | मिथुन | मी. | वृ. | कु. | " |
| वृ. | कर्क | ० | ० | ० | " |
| मं.र. | चं.बु. | बृ. | शु. | श. | ग्रहाः वाराश्च |

अथ सम्वत्सरस्वरमाह—

प्रभवाद्यब्दमैकैक मुदयत्यस्वरादिकः।
सन्ध्यास्त वत्सरं चेत्स्यात्पापस्यापि चवत्सरम ॥ ७६ ॥

प्रभवादिकमेकैकमब्दं चास्वरादिक उदयतिअर्थादकारस्वरे प्रभवादिकं द्वादशवत्सरम् । तथैवमिकारे प्रमथ्यादिकं द्वादशवत्सरम् । एवमुकारे खरादिकं द्वादश वत्सरम् । एवमेकारेशोभनादिकं द्वादशवत्सरम् । एवमोकारस्वरेराक्षसादिकं द्वादशवत्सरम् । अत्र चेद्यदि सन्ध्यास्तसंवत्सरं स्यात्तथापताक्यादौ पापग्रहस्य वत्सरं स्यात्तदातस्मिन् वर्षेमृतिर्हानिरसन्तोष स्यात् ॥ ७६ ॥

भा० टी०— प्रभवादि ६० सम्वत्सरों में क्रम से एक एक सम्वत्सर अकारादि स्वरोंद होते हैं । एवं एक एक स्वर में बारह २ संवत्सर हुए । सन्ध्या और अस्त स्वर वाले सम्वत्सर यदि केतु पताकि आदि चक्रों से जिस वर्ष में पाप ग्रह के वत्सर हो जाय तो उस वर्ष में मृत्यु हानि आदि होता है ॥७६॥

संवत्सर चक्रम् ।

| अ. | इ. | उ. | ए | ओ | पञ्चस्वराः |
|---|---|---|---|---|---|
| १ प्रभव | २ विभव | ३ शुक्ल | ४ प्रमोद | ५प्रजापति | सम्वत्सरनामा |
| ६ अंगिरा | ७ श्रीमुख | ८ भाव | ९ युवा | १० धाता | ,, |
| ११ ईश्वर | १२ बहुधान्य | १३ प्रमाथी | १४ विक्रम | १५ वृष | ,, |
| १६ चित्रभानु | १७ शुभानु | १८ तारण | १९ पार्थिव | २० व्यय | ,, |
| २१ सर्वजित | २२ सर्वधारी | २३ विरोधी | २४ विकृति | २५ खर | ,, |
| २६ नन्दन | २७ विजय | २८ जय | २९ मन्मथ | ३० दुर्मुख | ,, |
| ३१ हेलम्बी | ३२ विलम्बी | ३३ विकारी | ३४ शार्वरी | ३५ प्लव | ,, |
| ३६ शुभकृत् | ३७ शोभन | ३८ क्रोधी | ३९विश्वाव. | ४०पराभव | ,, |
| ४१ प्लवङ्ग | ४२ कीलक | ४३ सौम्य | ४४साधार. | ४५विरोध. | ,, |
| ४६ परिधावी | ४७ प्रमादी | ४८आनन्द | ४९ राक्षस | ५० अनल | ,, |
| ५१ पिङ्गल | ५२ कालयुक्त | ५३ सिद्धा. | ५४ रौद्र | ५५ दुर्मति | ,, |
| ५६ दुन्दुभि | ५७ रुधिरोद्गा | ५८रक्ताक्षी | ५९ क्रोधन | ६० क्षय | ,, |
| प्रभवादि १२ | प्रमथ्यादि १२ | खरादि १२ | शोभना.१२ | राक्षसादि | द्वादशाब्दाः |
| सवत्सर | परिवत्सरः | इदावत्सरः | अनवत्सरः | इद्वत्सरः | संज्ञान्तरम |

## अथ फलानि ।

किञ्चिल्लाभकरो बाल. कुमारस्त्वर्धलाभदः ।
सर्वसिद्धिं युवाधत्ते वृद्धे हानिर्मृतेक्षयः ॥ ७७ ॥
यात्रा युद्धे विवादे च नष्ट दंष्ट्रे रुजान्विते ।
बालस्वरो भवेदिष्टो विवाहादि शुभाशुभः ॥ ७८ ॥
सर्वेषु शुभ कार्येषु यात्रायां तु विशेषतः ।
कुमारः कुरुते सिद्धिं सङ्ग्रामे विजयं तथा ॥ ७९ ॥
शुभाशुभेषु कार्येषु मन्त्र यन्त्रादि साधने ।
सर्वसिद्धिं युवाधत्ते यात्रा युद्धे विशेषतः ॥ ८० ॥
दाने देवार्चने दीक्षा गूढ मन्त्रप्रकाशने ।
वृद्धस्वरो भवेद् भव्यो रणे भङ्गो भयङ्गमे ॥ ८१ ॥
विवाहादि शुभं सर्वं सङ्ग्रामाद्यशुभ तथा ।
न कर्त्तव्य नृभिः किञ्चिज्ञाते मृत्यु स्वरोदये ॥ ८२ ॥
तिथि वारश्चनक्षत्र यद्दिने च भवेन्मृतम् ।
तद्दिने वर्जयेत्सर्वं हानि मृत्युकरो यतः ॥ ८३ ॥

युग्मानि ।७७।७८।७९।८०।८१।८२।८३।

भा० टी०—अथ बालादि स्वरों का साधारण फल इस श्लोक से कह कर अग्रिम श्लोकों से विशेष फल को कहेंगे, यथा बाल स्वर में किसी कार्य को करने से स्वल्प लाभ, कुमार स्वरमें अर्द्ध लाभ तथा युवा स्वरमें सम्पूर्ण सिद्धि और वृद्ध स्वरमें हानि तथा मृत्यु स्वर में सम्पूर्ण नाशको प्राप्त होता है । ७७॥

यात्रा युद्ध विवाद ( कलह ) किसी वस्तु को नष्ट आदि होने में सर्पादि के काटने में रोगादि अवस्था मे बाल स्वर शुभ होता है ( अर्थात् बाल स्वर

मे भूला हुआ वस्तु मिल जाता है सर्पादि के काटने पर शीघ्र आराम हो जाता है तथा बाल स्वर मे रोगी शीघ्र निरोग हो जाता है ) तथा विवाहादि शुभ कार्य अशुभ होते हैं ॥ ७८ ॥

सभी शुभ कार्यो मे तथा यात्रा मे विशेष कर कुमार स्वर शुभ होता है एव युद्ध में विजय कारक होता है ॥ ७९ ॥

सभी शुभाशुभ कार्यों मे और मन्त्र यन्त्रादिकों के सिद्ध करने मे युवा स्वर सम्पूर्ण सिद्धिको करता है तथा यात्रा युद्धमे विशेष शुभ होता है ॥८०॥

दान तथा देवार्चन मे दीक्षा ग्रहण मे गोप्य मन्त्रों के प्रकाशन मे ( गुप्तमन्त्र, सलाह आदि को किसी कहने मे ) वृद्ध स्वर शुभ होता है किन्तु युद्ध मे नाश तथा यात्रा मे भय को करता है ॥ ८१ ॥

मृत्यु स्वर के प्राप्तहोनेपर विवाहादियावत् शुभ कार्य और समामादि अशुभ कार्य ( अर्थात् किसि प्रकार के भी शुभाशुभ कार्य ) किसी को भी नही करना चाहिये ॥ ८२ ॥

जिस दिन तिथि दिन वार नक्षत्र ये सभी मृत्यु स्वर को प्राप्त हों उस दिन किसी भी शुभाशुभ कार्य को नहीं करना चाहिये । क्यों की मृत्युस्वर में किसी कार्य को करने से हानि तथा मृत्यु होती है ॥ ८३ ॥



## सर्वस्वरैक्यचक्रम् ।

| अ | इ | उ | ए | ओ | स्वराः |
|---|---|---|---|---|---|
| क | ख | ग | घ | च | |
| छ | ज | झ | ट | ठ | वर्णाः |
| ड | ढ | त | थ | द | |
| ध | न | प | फ | ब | |
| भ | म | य | र | 'ल | |
| व | श | ष | स | ह | |
| प्रभवादि १२ | प्रमध्यादि १२ | खरादि १२ | शोभनादि २२ | राक्षसादि १२ | द्वादशाब्दाः |
| प्र भ इ<br>चि स नं<br>हे शु प<br>प पि दु | वि धी व<br>सु स वि<br>वि शा की<br>प्र का रु | शु प्र मा<br>ता वि ज<br>वि क सौ<br>भा सिर | प्र यु वि<br>पा वि म<br>शा वि सा<br>रा रौ क्रो | प्र धा सू<br>द्दा स दु<br>रु प वि<br>अ. दु. क्ष. | सवत्सराद. |
| सवत्सरः | परिवत्सरः | इदावत्सरः | अनवत्सरः | दुवत्सरः | |
| का ९ मा ३०<br>पौ ६० मा ३ ७२ | मा २७ का ३०<br>चै १५।७२ | चै १५ वै ३०<br>ज्ये २७।७२ | ज्ये ३ आ ३०<br>श्रा ३० भा ९।७२ | मा २१ आ ३०<br>का २१।७२ | मासाः |
| ३।६।११<br>१६२१२६<br>नन्दा ८१ | २।७।१२<br>१७।२२।२७<br>भद्रा ८७ | ३।८।१३<br>१८२३२८<br>जया ९३ | ४।९।१४<br>१९।२४।२९<br>रिक्ता ९९ | ५।१०।१५<br>१०।२५।३०<br>पूर्णा १०५ | तिथ्यः<br>नन्दाद्याः<br>योगः |
| सू मं | बु च | बृ | शु | [illegible] | ग्रहाः |
| १।५।८ | ३।४।६ | ९।१२ | २।७ | १०।११ | राशयः |
| रे अ भ<br>कृ रो मृ<br>आ । ७ | पु पुष्य<br>अ म<br>पू ५ | उफा । ह<br>चि स्वा<br>वि ५ | अ ज्ये<br>मू पू<br>उ या ५ | थ ध<br>श पू<br>उ भा ५ | नक्षत्राणि |
| दि १४<br>द २४ | दि १४<br>दं २४ | दि १४<br>दं २४ | दि १४<br>द २४ | दि १४<br>द २४ | दिनानि ।<br>दण्डाः |
| म ६०<br>बु २४।८४ | बु ३६<br>बृ ४८।८४ | बृ १२ शु ६०<br>श १२।८४ | र ३६<br>श ४८ न ४ | र २४<br>च ६०।८४ | समुदायता<br>वारभागाः |
| उदित<br>जन्म<br>बालः | भ्रमितः<br>कर्म<br>कुमारः | प्रान्तः<br>आधानं<br>युवा | सन्ध्या<br>पिण्डः<br>वृद्धः | अस्तं<br>छिद्रं<br>मृतिः | संज्ञा<br>संज्ञान्तरं<br>संज्ञान्तरं च |

## अथ वर्षगणितप्रकारमाह।

**वयोराशिस्वराङ्काश्च एकीकृत्य त्रिधान्यसेत्।**
**द्विचतुस्त्रिहतं कार्यं सप्ताष्टरसभाजितम्॥ ८४॥**

वयोराशिस्वराङ्का ये सन्ति तानेकीकृत्य तद्योगं कृत्वा त्रिधा प्रकारत्रयेण न्यसेत्स्थापयेत्। तद्द्विचतुस्त्रिहतं तथाक्रमात्सप्ताष्टरसभाजितं कार्यं तदा जन्मकोष्ठो भवति। अत्रेदमवधेयम्। यस्यारिष्टनिर्णयः कर्तव्योऽस्ति, तस्य जन्मतो वर्तमानवर्षपर्यन्तं याःसङ्ख्यास्त एव वयसश्याङ्काः। एवं तस्य जन्मराशिर्योऽस्ति तज्जन्मराशिपर्यन्तंवृषादिगणनया याः सङ्ख्यास्ता एवात्र राश्यङ्काः। यथा वृषराशिजन्मवत एकस्तथा मेषराशिजन्मवतो द्वादश एवं जन्मनक्षत्रजनितो नामादिमवर्णो योऽस्ति तस्य यो वर्णस्वरचक्रे स्वरस्तत्स्वरनिष्ठा ये तिथ्यङ्काः "चन्द्राष्टौ प्रथमे" इत्यादयस्त एवात्र स्वराङ्काः। तदुक्तमन्यैः "मेषाद्वृषादन्यतः स्वर्क्षे तिथ्ययोगः" अनेन वृषादाराशिगणना तथा स्वराङ्कतिथ्यङ्का एवेति साभोजातः। तेषां वयोराशिस्वराङ्कानां योगः कार्यस्तदङ्कवृन्दं त्रिषुस्थानेषु स्थापयेत्। तत्र प्रथमस्थाने तदङ्कवृन्दं द्वाभ्यां गुणितं सप्तभिर्भक्तं यदवशेषमानं तज्जन्मकोष्ठे चोर्ध्वस्थाने स्थापयेत्। एवं द्वितीयस्थाने स्थिततदङ्कवृन्दं चतुर्भिर्गुणितं तथाष्टाभिर्भक्तं यच्छेषमानं तज्जन्मकोष्ठे तदधो मध्यस्थाने स्थापयेत्। एवं तृतीयस्थाने स्थितं तदङ्कवृन्दं त्रिगुणितं रसभक्तं यदवशेषमानं तज्जन्मकोष्ठे सर्वाधः स्थापयेत्। एव जन्मकोष्ठस्य सम्पादनं जातम्॥ ८४॥

*भा॰ टी॰*—जिस के अरिष्ट निर्णय करना हो उसके वर्तमान अवस्था की संख्या (जन्म से वर्तमान वर्ष पर्यन्त की संख्या) तथा जन्म राशि पर्यन्त वृषादि गणनाङ्क से जो संख्या हो वह और जन्म नक्षत्र जनित नामादि

---

• मेषा द्वृषादन्यतः स्वर्क्षे तिथ्यङ्क योगः इस वाक्य के आधार पर वृषादि से तिथ्यङ्कयोग करते हैं, तथा वृषराशि के जन्मवाले की १ संख्या मिथुन राशि वाले की २ एवं क्रमसे मेष राशिके जन्म वाले की संख्या १२ गणना किया जाता है। तथा यथाक्रम परम्परा सम्प्रदाय से भी सिद्ध है।

जो वर्ण हो उसका जो वर्ण स्वर में स्वर हो उस स्वर का तिथ्यङ्क ( चन्द्राद्यै प्रथमे देया वग भागा द्वितीय के इत्यादि के क्रम से जो तिथ्यङ्क ) हो एवं इन तीनों ( वय, राशि, स्वरांक ) को जोड़ कर तीन स्थान में स्थापित कर क्रम से दो २ चार ४ और तीन ३ से गुणा कर क्रम से सात ७ आठ ८ और ६ छव से भाग देकर शेषांकों को जन्म कोष्ठ में अधोऽधः क्रम से तीन स्थान में स्थापन करे अर्थात् प्रथम शेष को ऊपर द्वितीय शेष को मध्य में तथा तृतीय शेष को नीचे के स्थान में स्थापित करे ऐसा करने से जन्म कोष्ठ का सम्पादन होता है ॥ ८४ ॥

अथ कर्मादिकोष्ठसाधनमाह ।

आधाने नव देयानि स्वरे कर्मणि पञ्च च ।
सर्वाङ्कव्यापिता पिण्डे छिद्रे श्रेणी व्यवस्थिता ॥ ८५ ॥

आधाने स्वरे आधानस्वरकोष्ठसाधने नव देयानि किन्तु पूर्वानीताङ्कवृन्दे नव मतानि योज्यानि । एव कर्मणि कर्म कोष्ठानयने पूर्वोक्ताङ्क वृन्दे पञ्चमानानि क्षेप्याणि एवं पिण्डे पिण्डाख्यकोष्ठसाधने पूर्वोक्ताङ्कव्यापिताकायाऽर्थो स्वर्वाङ्कानां जन्मकर्माधानानां ध्रुवांका शून्यपञ्चनवसमा योज्या । एवं छिद्रे छिद्र कोष्ठकानयने विहिताङ्कवृन्दसङ्ख्या श्रेणीव्यवस्थिता पंक्तिभि समन्विताऽर्थाज्जन्मकर्माधानपिण्डानां पंक्तिगतीध्रुवके शून्यपञ्च नव चतुर्दशारपे सहिता विधेया। तदैव समादाधानादिकोष्ठकानां स्वस्वाङ्कवृन्दं स्यात् । तत्र पूर्ववत्स्वस्वगुणकेन स्वस्वाङ्कवृन्दं सङ्गुण्य स्वस्व हरेण विभज्य तत्तदवशेषमानं स्वस्वेकाष्ठस्योर्ध्वमध्याध क्रमेण स्थापयेत् । अत्रायं भाव । कर्मकोष्ठसाधनेपूर्वोक्ताङ्कवृन्दे पञ्च मेलयित्वा तस्त्रिषु स्थानेषुस्थापयेत् । तत्र प्रथमस्थानगं तदङ्कयोगमानं द्विगुणितं सप्तभाजितं यदवशेषमानं तत्कर्मकोष्ठे चार्ध्वस्थाने स्थापयेत् । एवं द्वितीयस्थानस्थं तदङ्कयोगमान चतुर्गुणितं तथाष्टभक्तं यदवशेषमानं तत्कर्मकोष्ठे मध्यस्थाने स्थापयेत् । एवं तृतीयस्थानगतं तदङ्कयोगमानं त्रिगुणितं षड्भक्तं यच्छेषमानं तत्कर्मकोष्ठे चाध स्थाने स्थापयेत्। तदेवं कर्मकोष्ठसाधनं जातम् । अत्राधान कोष्ठसाधनमुच्यते। जन्मकोष्ठानयनार्थे यदङ्कवृन्दं प्रथमाद्यं तत्र नव

दत्वा तदा तत्तृतीयाङ्कवृन्दं स्यात्। तत्तृतीयाख्यमङ्कवृन्दं पूर्ववत्त्रिधा स्थापयित्वा तथा पूर्ववत्स्वस्वगुणकेन सङ्गुण्य स्वस्वहारेण विभज्य यदवशेषत्रयं तदाधानकोष्ठे पूर्ववत्त्रिधा स्थापयेत्। एवमाधानकोष्ठसाधनं जातम्। अत्र पिण्डकोष्ठसाधनमुच्यते। तत्र प्रथमाङ्कवृन्दे चतुर्दशाख्यं क्षेपकं दत्वा तदा तच्चतुर्थाङ्कवृन्दं स्यात्। ततः पूर्ववत्तच्चतुर्थाङ्कवृन्दं त्रिधा संस्थाप्य स्वस्वगुणगुणकेन सङ्गुण्य स्वस्वहरेण च विभज्य यदवशेषत्रयं तत् क्रमात्त्रिधा स्थापयेत्। तदेवं पिण्डाख्यकोष्ठसाधनं जातम्। अत्र छिद्रकोष्ठसाधनमुच्यते। तत्राद्याख्याङ्कवृन्देऽष्टक्षेपमष्टविंशतिसमं दत्वा तदा पञ्चमाङ्कवृन्दं स्यात्। तदिदं पूर्ववत्त्रिधा विन्यस्य स्वस्वगुणकेन सङ्गुण्य स्वस्वहरेण विभज्य यदवशेषत्रयं तत्पूर्ववत्त्रिधा स्थापयेत्। तदेवं छिद्राख्यकोष्ठसाधनं जातम्। परञ्चैवं जातानां पञ्चकोष्ठानां नैसर्गिकचक्रसंज्ञा कृतेति।

तथाचाह विश्वेश्वरः—

"तिथिराशियोद्धोऽथ प्रथमे जन्मकोष्ठके।
द्विचतुस्त्रिगुणितं सप्ताष्टरसभाजितम्॥ १॥
कर्मकोष्ठे च दत्वा आधाने नवकं तथा।
पूर्ववद्गुणनं कार्यं भजनञ्चापि पूर्ववत्॥ २॥
पिण्डे चतुर्दश दत्वा छिद्रेऽष्टाविंशतिं सुधीः।
द्विचतुस्त्रिभिर्गुणितं सप्ताष्टरसभाजितम्॥ ३॥

अत्रयद्यपि ग्रन्थकारेण चलचक्रस्य तथायोगचक्रस्य च प्रक्रिया न दर्शिता। तथाप्यत्र तच्चक्रद्वयस्य साधनं ज्योतिर्विदां सम्प्रदायसिद्धत्वात्तथा विश्वेश्वराद्युक्तप्रमाणस्वरसाधनमत्रोच्यतेतद्यथा। वर्णस्वरचक्रे यो वर्णस्वरः स च जन्मादिकानां पञ्चस्वराणां मध्ये यस्मिन्कोष्ठे भवेत्स च कोष्ठको नैसर्गिकचक्रे यो भवेत्तमेवात्र जन्मकोष्ठकं ततो द्वितीयकोष्ठकं कर्मकोष्ठकं ततस्तृतीयादिकोष्ठकत्रयमाधानादिकोष्ठत्रयमिति प्रकल्प्यैवं चलचक्रं साधयेत्। अथास्मिन् चलचक्रे तथा नैसर्गिकचक्रे जन्मादिकोष्ठकानां मध्ये द्वयोर्द्वयोः कोष्ठयोः स्वयोः स्वयोरर्पात्याजात्ययोर्योगतुल्यमङ्कवृन्दं प्रकल्प्य ततः स्वस्वध्रुवकान् दत्वा पूर्ववत्स्वस्वगुणकेन सङ्गुण्य स्वस्वहरेण विभज्य यदवशेषत्रयं तत् त्रिधा स्थापयेत्।

एवं स्वस्वकोष्ठकेऽस्यस्थापनाद्योगचक्रं भवेत्।

यथा नैसर्गिकचक्रजजन्मकोष्टकस्य तथाचलचक्रजजन्मकोष्टस्यचचांकयोगसमे शून्यध्रुवकं दत्वा यथास्थितं तंयोगं त्रिधा संस्थाप्योक्तविधिना द्वित्रिगुणितं सप्ताष्टरसभाजितं सत्त्रिधा शेषमानंयोगचक्रे जन्मकोष्ठके स्थापयेत्। एवमन्यकोष्ठकेपि यथाह विश्वेश्वरः।

> एवं नैसर्गिकं ज्ञेयंचलचक्रस्वरान् लिखेत्।
> यत्र कोष्ठो स्ववर्णो वै तत्रैव जन्मसंज्ञकम् ॥ १ ॥
> कर्माधानादिकान्सर्वान् विदित्वा विलिखेत्क्रमात्।
> नैसर्गिकंचलचक्रं च लिखित्वा सन्नियोजयेत् ॥ २ ॥
>
> जन्मना जन्म संयोज्य कर्मणा कर्मसंसमम्।
> आधानादित्रिकेप्येवं योज्याऽत्र ध्रुवकान्क्षिपेत् ॥ ३ ॥
> तैरेव गुणकैर्गुण्यं भजनं च तथाविधम्।

अत्रोदाहरणम्। शाकः १७८३ माघशुक्लपक्षदशीदण्डादि ४० ।११। अश्लेषानक्षत्रं २१।२१ तदुपरि मघानक्षत्रे द्वितीय दिने मघानक्षत्रं २१।४९ शोभनयोगे दण्डानिः ३३।३८। कुम्भार्कगतांशाः ४।९।३०। सूर्योदयादिष्टं २२।९ एवं विधे पद्माङ्गे शुक्रवासरे मम जन्म आसीत्। भयातं १०।३८ भभोगः ६०।१८ अत्र मघानक्षत्रस्याद्यचरणे जन्म तेननामादि मवर्णो मकारः। अस्योपरिगत इकारस्वरो वर्णस्वरचक्रे जातः। अस्य स्वरस्याधः स्थास्तिथ्यङ्कानवनागमिता: (८७) अथ जन्मतो वर्तमानवर्षे यावद्वर्षोऽटकाश्चन्द्राब्धिमिताः (४१)। तथा वृषराशेः स्वजन्मराशिं सिंहाख्यं यावद्राश्यङ्का वेदमिता (४)। एतेषां योगमानं प्रथमाङ्कवृन्दं (१३२) त्रिषु स्थानेषु विन्यस्य १३२।१३२।१३२ तत्राद्यस्थाने तद्वृन्दं द्विगुणितं जातं वेदाङ्गाश्विमितं (२६४) इदं सप्तत‍ष्टं जातं (५) इदं जन्माख्यकोष्ठस्याधः स्थापयेत्। एवं द्वितीयस्थाने तद्वृन्दं चतुर्गुणितं जातं १३२ × ४=(५२८) पुनरिदमष्टभक्तं शेषाङ्कमानं शून्य (०) जन्माख्यकोष्ठे मध्य स्थाने स्थापयेत्। एवंतृतीयस्थानस्थितं तद्वृन्दं त्रिगुणितं जातं ३ × १३२=(३९६) इदं रसतष्टं शेषाङ्कमानं शून्यं (०) जन्माख्यकोष्ठे

ऽन्त्येऽर्यात्सर्वाधः स्थापयेत् । एवं जन्माख्यकोष्ठसम्पादनं जातम् ।

अथ कर्माख्यकोष्ठसाधनमुच्यते । तत्र "आधानेनव देयानि स्वरे कर्मणि पञ्च च" इति पूर्वविहितप्रथमाङ्कवृन्दे पञ्च दत्वा तद्द्वितीयाङ्कवृन्दं स्यादितितन्मानं (१२२+५)=(१२७) इदं पूर्ववत्त्रिधा विन्यस्य स्वस्वगुणकेन सङ्गुण्य जातं तत्फलं १२७ × २।१२७ × ४।१२७ × ३ । वा २७४ । ५४८।३११इदं स्वस्वहरेण विभज्य त्रिधा तच्छेषाङ्कमानमिदं १।४।३। कर्माख्यकोष्ठे चोर्ध्वमध्याधः क्रमेण स्थापयेत् । एवं कर्माख्यकोष्ठसाधनंजातम् ।

अथाधानकोष्ठसाधनार्थं प्रथमाङ्कवृन्देनव दत्वा यत्तृतीयाङ्कवृन्दं जातं (१३२+९)=(१४१) इदं पूर्ववत्त्रिधा स्थापयित्वा स्वस्वगुणेन सङ्गुण्य जातं त्रिधा फलं १४१ × २।१४१ × ४।१४१ × ३ । वा २८२ । ५६४ । ४२३ इदं स्वहरेण विभज्य त्रिधा तच्छेषाङ्कमान २।४।३ चाधानकोष्ठे पूर्ववदूर्ध्वमध्याध. क्रमात्स्थापयेत् । इत्याधानकोष्ठानयन जातम् ।

अथ पिण्डकोष्ठानयनं कथ्यते । तत्र जन्मादिकोष्ठत्रयस्य शून्यपञ्चनवरूपाणां स्वस्वभुक्तानां योगेन चतुर्दशमितेन (१४)सम पिण्डकोष्ठज ध्रुवाङ्कमाने प्रथमाङ्कवृन्दे संयोज्य तच्चतुर्थाङ्कवृन्दं जात (१३२+१४)=(१४६) इदं पूर्ववत्त्रिधा फलं १४६ × २।१४६ × ४।१४६ × ३ वा २९२।५८४।४३८ इदं स्वस्वहरेण विभज्य त्रिधा तच्छेषाङ्कमानं ५।०।०। पिण्डाख्यकोष्ठके चोर्ध्व-मध्याध क्रमात्स्थापयेत् । इत्येवं पिण्डाकोष्ठकानयनं जातम् ।

अथ छिद्रकोष्ठकानयनमुच्यते । तत्र कोष्ठकचतुष्कोद्भवानं स्वस्वभुक्तानामेतेषा ०।५।९।१४। योगेनाष्टाविंशतिमितेन तुल्यं छिद्र कोष्ठकज ध्रुवाङ्कमानं प्रथमाङ्कवृन्दे दत्वा जात पञ्चमाङ्कवृन्द [१३२+२८]=(१६०) इदं त्रिधा विन्यस्य स्वस्वगुणकेन सङ्गुण्य जातं त्रिधा फलं १६० × २।१६० × ४।१६० × ३ वा ३२०।६४०।४८० इदं स्व स्वहरेण विभज्य त्रिधा तच्छेषाङ्कमानं ५।०।० इदं छिद्राख्यकोष्ठे पूर्ववत् त्रिधास्थापयेत् । इति छिद्राख्य-कोष्ठकं जातम् एवं साधितानां कोष्ठकानां स्थापनवशाज्जातं नैसर्गिक-चक्रमिति रूपं ।



### नैसर्गिकचक्रम् ।

| ज | क | आ | पि | छि |
|---|---|---|---|---|
| ५ | १ | २ | ५ | ५ |
| ० | ४ | ४ | ० | ० |
| ० | ३ | ३ | ० | ० |

(२) अथ चलचक्रोदाहरणमुच्यते । तत्र वर्णस्वरचक्रे [६] स्वराद्यस्थं कर्मकोष्ठाङ्कं तेनात्र नैसर्गिकचक्रजं कर्मकोष्ठाङ्कं यत्तदेव जन्मकोष्ठाभिधं चलचक्रे लेख्यम् । ततश्चाधानाभिधं कर्मसंज्ञकम् । एवं तृतीयं पिण्डकोष्ठाङ्कमाधानसंज्ञकम् । ततश्चतुर्थं छिद्रकोष्ठाङ्कं पिण्डसंज्ञकम् । ततः प्रथमं जन्मकोष्ठाङ्कं छिद्राभिधम् । एवं कृते जातं चलचक्रस्वरूपमिदम् ।

| ज | क | आ | पि | छि |
|---|---|---|---|---|
| १ | २ | ५ | ५ | ५ |
| ४ | ४ | ० | ० | ० |
| ३ | ३ | ० | ० | ० |

अथ योगचक्रोदाहरणमुच्यते । तत्र साधितचक्रद्वये जन्मकोष्ठकद्वयस्थाङ्क

५ १
० ४
० ३

योगमाने ६ । ४ । ३ शून्यांश्च दत्वा यथास्थितं सतैरेव गुणकैर्द्विचतुस्त्रिभिर्गुणितं जातं १२।१६।९ इदं क्रमात्सप्ताष्टसप्तहरैर्भक्तं जातं शेषत्रयं ५।०।२ जन्मकोष्ठेऽन्योर्ध्वमध्याधः क्रमात्स्थापयेत् ।

एवं नैसर्गिकचक्रे कर्मकोष्ठाङ्काः १।४।३। तथा चलचक्रे कर्मकोष्ठाङ्काः २।४।३ एषां योगेऽस्मिन् ३।८।६ पञ्चप्रमितं स्वगुणकमानं दत्वा जातं ८।१३।११ इदं स्वस्वगुणकेन सङ्गुण्य जातम् ।१६।५२।३३ स्वस्वहरेण लब्धं २।४।५ इदं कर्मकोष्ठे चोर्ध्वमध्याधः क्रमेण स्थापयेत् ।

अथ नैसर्गिकचक्रजातमाधानकोष्ठाङ्कमानं २।४।३ तथा चलचक्रजमाधानकोष्ठाङ्कमानं ५।०।० अस्माङ्कमानद्वयस्य योगोऽस्मिन् ७।४।३ नव प्रमितं स्वध्रुवाङ्कमानं दत्वा जातं १६।१३।१२ इदं स्वस्वगुणकेन सङ्गुण्य जातं ३२।५२।३६ स्वस्वहरेण विभज्य शेषत्रयं ४।४।० आधानकोष्ठे पूर्ववदूर्ध्वमध्याधः क्रमात्स्थापयेत् ।

एवं नैसर्गिकचक्रजातं पिण्डकोष्ठाङ्कमानं ५।०।० तथा चलचक्रजं तदङ्कमानं ५।०।० अनयोर्योगेऽस्मिन् १०।०।० चतुर्दशसमं स्वक्षेपकं क्षेप्यं जातं २४।१४।१४ इदं स्वस्वगुणकेनगुणितं जातं ४८।५६।४२ इदं स्वस्वहरेणविभज्य शेषत्रय ६।०।० इद पिण्डकोष्ठे पूर्ववत्स्थापयेत् । अथ नैसर्गिकचक्रजं छिद्रकोष्ठाङ्कमानं ५।०।० तथा चलचक्रजं तदङ्कमानं ५।०।० अनयोर्योगेऽस्मिन् १०।०।० स्वक्षेपकमष्टाविंशतिमितं दत्वा जातं ३८।२८।२८ इदं स्वस्वगुणकेन सङ्गु० जातं ७६।११२।८४ इदं स्वस्वहरेण विभज्य शेषत्रयं ६।०।० छिद्रकोष्ठे पूर्ववत्स्थापयेत् । एवं कृतेजातं योगचक्रस्वरूपमिदम् ।

| जन्म | कर्म | आधान | पिण्ड | छिद्र |
|---|---|---|---|---|
| ५ | २ | ४ | ६ | ६ |
| ० | ४ | ४ | ० | ० |
| २ | ३ | ० | ० | ० |

अथ नैसर्गिकचक्रसाधने मतान्तरं प्रतिपाद्यते । दम्पत्योराद्यङ्कस्तया स्वजन्मराशिस्वराङ्काश्चैकीकृत्य तत्त्रिधा विन्यस्य क्रमेण द्विचतुस्त्रिभिः सङ्गुण्य सप्ताष्टत्रिभिर्विभज्य शेषत्रय जन्मकोष्ठे चोर्ध्वाधः क्रमेण स्थापयेत् । ततो जन्मस्वराद्द्वितीये कर्माख्यकोष्ठे ये स्वतिथ्यङ्कास्तथापूर्वोक्तयोराद्यङ्काश्चैकीकृत्यत्रिधा संस्थाप्य स्वस्वगुणकेन सङ्गुण्य जाते त्रिधा गुणनफले प्रक्षेपत्रय दत्वा ततस्तत्स्वस्वहरेण विभज्य शेषत्रयं पूर्ववत्कर्मकोष्ठे स्थापयेत् । एवं पूर्वोक्त

योराश्यङ्कास्तथा स्ववर्णस्वरात्तृतीयकोष्ठे चाधानाख्ये ये तिथ्यङ्कास्तानेकीकृत्य त्रिधा विन्यस्य स्वस्वगुणकेन सङ्गुण्य त्रिषु स्थानेषु स्थितेषु गुणनफलेषु प्रत्येकं नव दत्वा ततस्तत्स्वस्वहरेण विभज्य शेषत्रयमाधानकोष्ठे पूर्ववन्न्यसेत्। एवं पूर्वोक्तयोराश्यङ्कास्तथा वर्णस्वराच्चतुर्थे पिण्डाख्यकोष्ठे स्वतिथ्यङ्कमेकीकृत्य त्रिधा विन्यस्य स्वस्वगुणकेन सङ्गुण्य स्थानत्रये गुणनफले प्रत्येकं चतुर्दशसमं स्वक्षेपकं दत्वा ततस्ततःस्वस्वस्वहरेण विभज्य शेषत्रयं पिण्डकोष्ठेके पूर्ववत्स्थापयेत्। एवं तत पञ्चमं छिद्रप्रश्नके तिथ्यङ्कास्तथा पूर्वोक्ता वयोराश्यङ्कायैकीकृत्य त्रिधा न्यस्तं कृत्वा स्वस्व गुणकेन सङ्गुण्य त्रिषुस्थानेषु गुणनफलेषु प्रत्येकं स्वाभुवाङ्कमानमष्टाविंशतिसमं दत्वा स्वस्वहरेण विभज्य शेषत्रयं त्रिधा पूर्ववच्छिद्रकोष्ठके स्थापयेत्।

पुनर्मतान्तरं प्रदर्श्यते। तद्यथा। तत्र जन्मकोष्ठादित्रयस्य साधनमधुना प्रदर्शितविधिवद्बोध्यम्। अथ पिण्डकोष्ठे तिथ्यङ्कास्तथायोराश्यङ्कायैकीकृत्य त्रिधा विन्यस्य स्वस्वगुणकेन सङ्गुण्य स्वस्वहरेण विभज्य शेषत्रये क्रमाच्छून्यं तथा पञ्चमितं नवमितं च दत्वा पुनः स्वस्वहरेण विभज्य शेषत्रयं पूर्ववत्पिण्डेकोष्ठेस्थापयेत्। अथवा प्रथमशेषे साधितानां जन्मकोष्ठाद्य स्थानां शेषानां योगसमं तथा द्वितीयशेषे कर्मकोष्ठाद्य स्थस्य शेषत्रयस्य योगसमं तथा तृतीयशेषे चाधानकोष्ठाद्य स्थस्य शेषत्रयस्य पिण्डकोष्ठे पूर्ववत्स्थापयेत्। अथ छिद्रकोष्ठसाधने ॥ पूर्वोक्तवयोराश्यङ्कस्तथा तत्तिथ्यङ्कायैकीकृत्य त्रिधा विन्यस्य स्वस्वगुणकेन गुणयित्वा स्वस्वहरेण विभज्य त्रयाणां शेषाणां मध्ये क्रमात्पञ्चमितं तथा नवमितं चतुर्दशमितं च दत्वा पुनः स्वस्वहरेण विभज्य शेषत्रयं पूर्ववत्त्रिधा पिण्डकोष्ठके स्थापयेत्। अथवा प्रथमशेषे जन्मादिकोष्ठचतुष्टयोर्ध्वाङ्कयोगमितं तथा द्वितीयशेषे तन्मध्याङ्कयोगमितं तथान्त्यशेषे तदन्तिमाङ्कयोगमितं दत्वा पुनः स्वस्वहरेण विभज्य शेषत्रयं छिद्रकोष्ठे पूर्वरीत्यास्थापयेत्। एवमप्ययदीक्षितप्रभृतिभिस्तट्टीकाकारैर्यन्नैसर्गिकचक्रसाधनप्रक्रिया प्रदर्शिता। तस्या मूलकारसूत्रार्थबहिर्भूतत्वात्तथा विश्वेश्वरादिप्रणीतव

त्वनप्रमाणानुकूलार्थबाह्यत्वात्साप्रक्रिया नादरणीयेति किन्तु प्रथम यदुदाहरण मया प्रदर्शितं तदेव बहुसम्मतं ममापि मत स्यादिति सुधीभिर्विभाव्यम् ।

अथ जन्मादिकोष्ठकानां प्रयोजनमुच्यते । जन्मकोष्ठे स्वात्मनः शुभाशुभाज्ञानम् । कर्मकोष्ठे कर्मण. सिद्ध्यसिद्धिज्ञानम् । आधानाभिधे कोष्टे पुत्रादे. शुभाशुभं चित्तभ्रान्ति । पिण्डकोष्ठेपिण्डसम्बन्धिबन्धुसुविशेषादिज्ञानम् । छिद्रकोष्ठे द्रव्यव्ययवाहनादौ शुभाशुभमिति । अथ तत्प्रकारः प्रदर्श्यते । पूर्वरीत्या त्रयाणां वर्षेशानां मध्ये प्रथमाब्दपस्य शनेः स्थूलं फलं प्रथममासचतुष्टयं यावत्कथनीयमिति । तत्रापि यदि जन्मकाले स्वोचादिस्थानजातेन बलेन सहित. शनिर्भुन सद्भावगतस्तर्हि तत्फलं श्रेष्ठं जवना मनीशालाभस्तथा वृद्धाङ्गनासुखं च । एवं जन्मकाले यदि नीचादिस्थानोपलक्षितो निर्बलस्तथाऽनिष्टभावगतः शनिस्तदातत्फलमधमम्लेच्छादाभिस्तथा वृद्धाङ्गनादेर्भयः स्वदेहे वायुप्रकोप । एव सर्वेषामब्देशानां फलं बोध्यमिति । तथा पुनरुदिक्षादिस्वराणां द्विसप्ततिदिनात्मकस्य स्वस्ववर्षविभागस्य पूर्वकथितस्यापिभागत्रयं चतुर्विंशतिदिनात्मकं विधेयम् । तत्रापि फलं विचारणीयम् । तद्यथा । नैसर्गिकचक्रे जन्मकोष्ठस्योर्ध्वस्थाने प्रथमपङ्क्त्यां पञ्चसङ्ख्योपलक्षितो गुरुस्तथा चलचक्रे तत्कोष्ठस्योर्ध्वस्थाने रूपसङ्ख्योपलक्षितो रविः । तेनात्र गुरोरन्तर रविफलं स्यात्पूर्वोक्तदशान्तर्दशानुकूलरूपम् । तथा शने. शुभाशुभफलं निश्चितमिति प्रथमविभागे चतुर्विंशतिदिनात्मके लेखनीयमिति । अथाग्रे द्वितीयविभागे चतुर्विंशतिदिनात्मके तु नैसर्गिकचक्रे जन्मकोष्ठस्य मध्यस्थाने शून्योपलक्षितो राहुस्तथा चलचक्रे वेदसङ्ख्योपलक्षितो बुधस्तेनात्र तयो फलं कथितविधिना लेख्यम् । तदग्रे तृतीयविभागे चतुर्विंशतिदिनात्मके तु नैसर्गिकचक्रे जन्मको ष्ठाधः स्थाने राहुस्तथा चलचक्रे कुजस्तेनात्र तयोरप्युक्तफलयुक्तप्रकारेण लेख्यम् । एवं द्वितीयमासादिषु द्विसप्ततिदिनमितेषु फलं लेखनीयमिति ॥ ८५ ॥

भा० टी०—पूर्व श्लोक में जन्म कोष्ठ का साधन कर इससे कर्म, आधान, पिण्ड और छिद्र स्वर के कोष्ठ को साधन बताते हैं कि आधान कोष्ठ के साधन में पूर्वोक्त अंक योग में ९ योग करना चाहिये तथा कर्म कोष्ठ के साधन में पूर्वोक्त अंक योग में ५ तथा पिण्ड कोष्ठ साधन में पूर्वोक्त

योराद्यङ्कास्तथा स्ववर्णस्वरात्तृतीयकोष्ठे चाधानाख्ये ये तिथ्यङ्कास्तानेकीकृत्य त्रिधा विन्यस्य स्वस्वगुणकेन सङ्गुण्य त्रिषु स्थानेषु स्थितेषु गुणनफलेषु प्रत्येकं नव दत्वा ततस्तत्स्वस्वहरेण विभज्य शेषत्रयमाधानकोष्ठे पूर्ववन्न्यसेत्। एवं पूर्वोक्तयोराद्यङ्कास्तथा वर्णस्वराच्चतुर्थे पिण्डाख्यकोष्ठे स्वतिथ्यङ्कश्चैकीकृत्य त्रिधा विन्यस्य स्वस्वगुणेन सङ्गुण्य स्थानत्रये गुणनफले प्रत्येकं चतुर्दशसमं स्वस्वेषु दत्वा ततस्तत्स्वस्वहरेण विभज्य शेषत्रयं पिण्डकोष्ठके पूर्ववत्स्थापयेत्। एवं ततः पञ्चमे छिद्राख्ये तिथ्यङ्कास्तथा पूर्वोक्तयोराद्यङ्काश्चैकीकृत्य त्रिधा न्यस्तं कृत्वा स्वस्वगुणकेन सङ्गुण्य त्रिषुस्थानेषु गुणनफलेषु प्रत्येकं स्वाभ्रवाङ्कमानमष्टाविंशतिसमं दत्वा स्वस्वहरेण विभज्य शेषत्रयं त्रिधा पूर्ववच्छिद्रकोष्ठके स्थापयेत्।

पुनर्मतान्तरं प्रदर्श्यते। तद्यथा। तत्र जन्मकोष्ठादित्रयस्य साधनमधुना प्रदर्शितविधिवद्बोध्यम्। अथ पिण्डकोष्ठे तिथ्यङ्कास्तथावयोराद्यङ्काश्चैकीकृत्य त्रिधा विन्यस्य स्वस्वगुणकेन सङ्गुण्य स्वस्वहरेण विभज्य शेषत्रये क्रमाच्छून्यं तथा पञ्चमितं नवमितं च दत्वा पुनः स्वस्वहरेण विभज्य शेषत्रयं पूर्ववत्पिण्डकोष्ठेस्थापयेत्। अथवा प्रथमशेषे साधितानां जन्मकोष्ठाद्य स्थानां शेषाणां योगसमं तथा द्वितीयशेषे कर्मकोष्ठाद्य स्थस्य शेषत्रयस्य योगसमं तथा तृतीयशेषे चाधान कोष्ठाद्यः स्थस्य शेषत्रयस्य पिण्डकोष्ठे पूर्ववत्स्थापयेत्। अथ छिद्रकोष्ठसाधने तु पूर्वोक्तयोराद्यङ्कास्तथा तत्तिथ्यङ्काश्चैकीकृत्य त्रिधा विन्यस्य स्वस्वगुणकेन गुणयित्वा स्वस्वहरेण विभज्य त्रयाणां शेषाणां मध्ये क्रमात्पञ्चमितं तथा नवमितं चतुर्दशमितं च दत्वा पुनः स्वस्वहरेण विभज्य शेषत्रयं पूर्ववत्त्रिधा पिण्डकोष्ठके स्थापयेत्। अथवा प्रथमशेषे जन्मादिकोष्ठचतुष्टयोर्ध्वाङ्कयोगमितं तथा द्वितीयशेषे तन्मध्याङ्कयोगमितं तथान्त्यशेषे तदन्तिमाङ्कयोगमितं दत्वा पुनः स्वस्वहरेण विभज्य शेषत्रयं छिद्रकोष्ठे पूर्वरीत्यास्थापयेत्। एवमप्ययदीक्षितप्रभृतिभिस्तट्टीकाकारैर्यन्नैसर्गिकचक्रसाधनप्रक्रिया प्रदर्शिता। तस्या मूलकारसूत्रार्थबहिर्भूतत्वात्तया विश्वेश्वरादिप्रणीतव

चनप्रमाणानुकूलार्थंबाह्यगतत्वात्प्रक्रिया नादरणीयेति किन्तु प्रथम यदुदाहरण मया प्रदर्शितं तदेव बहुसम्मतं ममापि मतं स्यादिति सुधीभिर्विभाव्यम् ।

अथ जन्मादिकोष्ठकानां प्रयोजनमुच्यते । जन्मकोष्ठे स्वात्मन शुभाशुभाज्ञानम् । कर्मकोष्ठे कर्मणः सिद्धयसिद्धिज्ञानम् । आधाना भिधे कोष्टे पुत्रादे शुभाशुभं चिन्तयन्ति । पिण्डकोष्ठे पिण्डसम्बन्धिबन्धुपुवि वोधादिज्ञानम् । छिद्रकोष्ठे द्रव्यव्ययबाहुनादौ शुभाशुभमिति । अथ तत्प्र कार प्रदर्श्यते । पूर्वरीत्या त्रयाणां वर्षशानां मध्ये प्रथमाब्दपस्य शने स्थूल फलं प्रथममासचतुष्टयं यावत्कथनीयमिति । तत्रापि यदि जन्मकाले स्वोच्चादि स्थानजातेन बलेन सहितः शनिर्पुन सद्यभागगतस्तर्हि तत्फलं श्रेष्ठ अथवा धनोलाभस्तथा वृद्धाङ्गनासुखं च । एवं जन्मकाले यदि नीचादिस्थानोपलक्षितो निर्बलस्तथाऽनिष्टभागगतः शनिस्तदा तत्फलमधममस्लेभाशनिस्तथा वृद्धाङ्गनादेर्भ य स्वदेहे वायुप्रकोप । एवं सर्वेषामब्देशानां फलं बोध्यमिति । तथा पुनर्यदि तादिस्वराणां द्विसप्ततिदिनात्मकस्य स्वस्ववर्षविभागस्य पूर्वकथितस्यापि भागत्रय चतुर्विंशतिदिनात्मकं विधेयम् । तत्रापि फलं विचारणीयम् । तद्यथा । नैसर्गिक चक्रे जन्मकोष्ठस्योर्ध्वस्थाने प्रथमपक्षाख्ये पक्षसङ्ख्योपलक्षितो गुरुस्तथा चल चक्रे तत्कोष्ठस्योर्ध्वस्थाने रूपसङ्ख्योपलक्षितो रवि । तेनात्र गुरोरन्तर रविफल स्यात्पूर्वोक्तदशान्तर्दशानुकूलरूपम् । तथा शने शुभाशुभफलं निश्चितमिति प्रथमविभागे चतुर्विंशतिदिनात्मके लेखनीयमिति । अथाग्रे द्वितीयविभाग चतु र्विंशतिदिनात्मके तु नैसर्गिकचक्रे जन्मकोष्ठस्य मध्यस्थाने शून्योपलक्षितो राहु स्तथा चलचक्रे वेदसङ्ख्योपलक्षितो बुधस्तेनात्र तयो फल कथितविधिना लेख्यम् । तदग्रे तृतीयविभागे चतुर्विंशतिदिनात्मके तु नैसर्गिकचक्रे जन्मको ष्ठाध स्थाने राहुस्तथा चलचक्रे कुजस्तेनात्र तयोरप्युक्तफलमुक्तप्रकारेण लेख्यम् । एवं द्वितीयमासादिषु द्विसप्ततिदिनमितेषु फलं लेखनीयमिति ॥ ८५ ॥

भा० टी०—पूर्व श्लोक से जन्म कोष्ठ का साधन कर इससे कर्म, आधान, पिण्ड और छिद्र स्वर के कोष्ठ को साधन बताते हैं कि आधान कोष्ठ के साधन में पूर्वोक्त अंक योग में ९ योग करना चाहिये तथा कर्म कोष्ठ के साधन में पूर्वोक्त अंक योग में ५ तथा पिण्ड कोष्ठ साधन में सर्वोक व्यापित

अर्थात् जन्म कर्म और आधान का ध्रुवांकयोग १४ (अर्थात् जन्म का ० कर्म का ५ आधान का ९ योग १४ ) जोड़ना चाहिये। एवं छिद्र कोष्ठ के साधन में श्रेणीव्यवस्थित अंक अर्थात् जन्म कर्म आधान और पिण्ड का ध्रुवांकयोग ०+५+९+१४=२८ योग करना चाहिये। एवं पूर्वोक्त अंक योग में कर्म आधान पिण्ड और छिद्र कोष्ठ के साधन के लिये क्रमशः ५।९। १४।२८ का योग कर पूर्वोक्त रीति से अंक साधन करे। अर्थात् कर्म कोष्ठ साधन में पूर्वोक्तअंक योग में ५ जोड़ कर तीन स्थान में स्थापित कर क्रम से २ दो, ४ चार और ३ तीन से गुणित कर क्रमशः सात ७ आठ ८ और ६ छव से भाग देकर शेषाङ्कों को क्रमशः अधोऽधः कर्म कोष्ठ में लिखे। एवं आधान कोष्ठ साधन में पूर्वोक्त अंक योग में ९ जोड़ कर तीन स्थान में स्थापित कर-क्रमशः २।४।३ से गुणित कर ७।८।६ से भाग देकर शेषाङ्कों को क्रमशः अधोऽधः आधान कोष्ठ में लिखे। ऐसे ही १४ युक्त पूर्वोक्त अङ्क योग से पिंड के, तथा २८ युक्त पूर्वोक्त अङ्क योग से छिद्र संज्ञक कोष्ठ की पूर्ति करे। इस प्रकार सभी कोष्ठों का साधन हुआ॥ ८५॥*

---

* इस प्रकार साधन किये गये को नैसर्गिक चक्रकल्पना किया गया है। अथ यद्यपि यहां ग्रन्थकार ने चल चक्र और योग चक्र के प्रक्रिया को नहीं लिखा है तथापि ज्योतिर्विदों के सम्प्रदाय में सिद्ध होने के कारण मैं भी संक्षेप से किञ्चित् दिग् दर्शन कराता हूं—अथ प्रथम चल चक्र का साधन प्रकार लिखता हूं वर्णस्वर चक्र में जो स्वर वर्ण स्वर हो वह जन्मादि पञ्च स्वर में जिस कोष्ठ में हो वह कोष्ठ नैसर्गिक चक्र में जिस कोष्ठ में हो उसी को जन्म स्वर मान कर उससे द्वितीय को कर्म कोष्ठ तृतीय को आधान कोष्ठ चतुर्थ को पिण्ड और पञ्चम को छिद्र कोष्ठ कल्पना कर चल चक्र साधन करे। अथ योग चक्र साधन प्रकार—पूर्वोक्त रीति से नैसर्गिक चक्र तथा चल चक्र लिख कर नैसर्गिक चक्र स्थित जन्मादि कोष्ठ के साधित अङ्कों को चल चक्र स्थित जन्मादि कोष्ठ के अङ्कों में यथा क्रम से योग करे अर्थात् प्रथम शेषाङ्क को प्रथम में, द्वितीय को द्वितीय में तृतीय को तृतीय में योग करके स्वस्वध्रुवाङ्क जोड़ कर उन्हीं गुणनाङ्कों से गुण कर वैसे ही यथा क्रम से

अथतिथ्याद्यानयनमाह—

गणयित्वा निर्णयं वर्षे वर्षप्रभाग कल्पना ।

पञ्चभिश्च हृते शेषे नन्दाद्या मृत्यु कारणम् ॥ ८६ ॥

सं० टी०—पञ्चस्वरचक्रं विधाय तत्र वक्ष्यमाणयोगैर्मृत्युं निश्चित्य तत्कालजनितं तिथ्याद्यानयनं प्रदर्शयति । वर्षे निर्णयं मरण निश्चयं गणयित्वा ज्ञात्वा तदा वर्षप्रभागकल्पना कार्या किन्तु कस्मिन् विभागेऽर्थात्कस्मिन्नुदितादिस्वरजानां द्विसप्ततिदिनात्मकमासानामन्तरे मृत्युर्भविष्यतीति विचारणीयम् । तद्यथा । पूर्वोक्तवयोराशिस्वराङ्कानां योगसमे प्रथमाङ्कवृन्दे पञ्चभक्ते सत्येकादिशेषवशाद्विहितोदितादिस्वरादधःस्थे द्विसप्ततिदिनात्मके मासे मृत्युः कथनीयः । अत्रेदमवधेयम् । एकशेषे पूर्वविहितोदितस्वरस्य वर्षभागे । चेद्द्वौ शेषौ तदा भ्रमितस्वरस्य वर्षभागे । त्रिशेषे क्रान्तस्वरस्य वर्ष विभागे चतुर्मिते शेषे सम्पास्वरवर्षभागे पञ्चमिते शेषेऽस्तस्वरवर्षभागे द्विसप्ततिदिनात्मके मरणं वदेत् । एवं पञ्चस्वराणां मध्ये यस्मिन् जन्मादिकोष्ठे मरणमायाति तत्रापि द्विसप्ततिदिनानां मध्ये कस्मिन् त्रिभागे चतुर्विंशतिदिनात्मके मरणं भवेदितिज्ञानमुच्यते । यस्मिन् जन्मादिकोष्ठे मरणनिर्णयं प्राप्तं तत्रोर्ध्वमध्याधःस्थे स्थानत्रये यस्मिन् शून्यं स्यात्तद्विभागे मरण भवेत् । अय भावः । ऊर्ध्वस्थाने शून्ये तदा प्रथमत्रिभागे चतुर्विंशतिदिने । यदि मध्यस्थानेऽङ्काभावस्तदा चतुर्विंशतिदिनात्परमष्टचत्वारिंशद्दिनावधि । एव यदि सर्वाधः स्थाने शून्यं तदा तृतीयभागेऽर्थादष्टचत्वारिंशद्दिनात्परं द्विसप्ततिदिने यावन्मरणं भवेत् । अत्रैवं यदि चोर्ध्वमध्याध. स्थानत्रये सर्वस्मिन् शून्यानि वा स्थानद्वये च शून्यं तदा कस्मिन् त्रिभागे मरणं भवेदिति प्रतिपाद्यते । तदा पूर्वं वर्षेशत्रयमध्ये यो बली तस्य शून्य त्रिन्तु शून्यकोष्ठस्यचतुर्विंशतिदिनाभ्यन्तरे मरणं भवेत्परमेवं तदैव यदि त्रयो वर्षेशाः पापाः स्यु । अथ यदि तेषु वर्षेशेषु शुभग्रहेषु तदा जन्मकाले देहत्रिकोणादतिरिक्तस्थानेषु स्थित सौम्यग्रहजनितोर्ध्वमध्याध स्थचतु-

७२८१६ से भाग देकर जो शेष हो उनको नैसर्गिक चक्र के ही रीति से अधोऽधः स्थापित करे । एवं योग चक्र होता है ।

विंशतिदिनाभ्यन्तरे मृत्युर्वाच्यः। अथवा वर्षेशसम्बन्धाभावानामपि पापानां कोष्ठभागे चतुर्विंशतिदिनाभ्यन्तरे मृत्युः। तत्र यदि स्थानत्रये सौम्या एव तदा जन्मकाले केन्द्रत्रिकोणेतरगतसौम्यभागे मरणम्। अथ चतुर्विंशतिदिनमध्येऽपि कस्मिन् दिने निधनं स्यादिति परामर्शे अप्पयदीक्षितनामा गणको वदति। तद्यथा। तत्र स्वरोदयोक्तसर्वतोभद्रचक्रोक्तपापविद्धं यत्र दृश्यते तत्र दिने मृत्युर्वाच्यः। अथ नन्दादिज्ञानमुच्यते पूर्वोक्ते प्रथमाङ्कवृन्दे पञ्चभिर्भक्ते रूपशेषे नन्दायाम्। द्विशेषे भद्रायाम्। त्रिशेषे जयायाम्। चतुःशेषे रिक्तायाम्। पञ्चशेषे पूर्णायाम्। इति मरणं विभाव्यम्। अथैवं नन्दादितिथिज्ञाने सति षट्सु नन्दासु कस्यां नन्दायां मरणं भविष्यतीति ज्ञानं प्रदर्श्यते। तद्यथा। पूर्वोक्ते प्रथमांकवृन्दे षड्भक्ते रूपशेषे प्रथमनन्दायामर्थाच्छुक्लप्रतिपदि। द्विशेषे द्वितीयनन्दायां शुक्लषष्ठ्याम्। त्रिशेषे तृतीयनन्दायां शुक्लैकादश्याम्। चतुःशेषे चतुर्थनन्दायां कृष्णप्रतिपदि। पञ्चशेषे पञ्चनन्दायां कृष्णषष्ठ्याम्। षट्शेषे षष्ठनन्दायां कृष्णैकादश्याम्। एवं प्रथमांकवृन्दात्पञ्चभक्ताद्वृद्धिशेषेन ज्ञातायां भद्रायां सत्यां षट्सुभद्रासु कस्यां भद्रायामितिज्ञानं प्रथमांकवृन्दात्षड्भक्तादेकादिशेषवशेनैकविधिना भवेत्। एवं सर्वत्र बोध्यम्। अथ तिथिज्ञाने मतान्तरं प्रतिपाद्यते। पूर्वोक्तांकवृन्दे पञ्चभक्ते रूपादिशेषवशाद्यस्मिन् जन्मादिस्वरे मरणमायाति तत्स्वराधःस्था या नन्दादिका तिथिर्वर्णस्वरचक्रे भवति तस्यां मरणं वदेदेवं नक्षत्रादिकनिर्णयमपि भवेदिति कैश्चिदुदितम्॥ ८६॥

भा० टी०—एवं पूर्वोक्त रीति से पञ्चस्वर चक्र की रचना करके आगे कथित "रवि मन्दकुजौ वर्षे" इत्यादि षोडश योगों से मृत्यु का निश्चय करके वर्ष प्रभाग की कल्पनाकरे यथार्थ किस द्विसप्तति ७२ दिनात्मक मास में मृत्यु होगी ? इसका ज्ञान प्रकार पूर्वोक्त जो "वर्ष,राशि,स्वराङ्क," का योग है उसमें ५ पांच से भाग देने से यदि १ एक शेष हो तो उदितस्वर के वर्ष भाग में २ दो शेष रहे तो भ्रमित स्वर के वर्ष भागमें एवं ३ तीन रहे भ्रान्त स्वर के वर्ष भाग में तथा ४ शेष रहे तो सन्ध्या स्वर के और ५ पांच शेष रहें तो अस्त स्वर के वर्ष विभाग में मरण कहना चाहिये इस ७२ द्विसप्तति दिनात्मक मास का

तीन विभाग करना चाहिये, जिस कोष्ठ मे मरण प्राप्त हो उस कोष्ठ के ऊर्ध्व स्थान में शून्य हो प्रथम विभाग में मध्य में शून्य हो तो द्वितीय स्थान में तथा यदि नीचे के स्थान में शून्य हो तृतीय भाग मे मृत्यु होती है। यदि तीनों स्थान में अथवा दो स्थान म शून्य हो तो वर्गेशों के बलाबल के अनुसार प्रथम द्वितीय अथवा तृतीय भाग में मृत्यु कहना चाहिये। अथ उत्तरार्ध से नन्दादि तिथियों का ज्ञान कहते हैं। पूर्वोक्त योगांक में ५ के भाग देने से यदि १ शेष बचे तो नन्दा तिथि में २ शेष बचे तो भद्रा तिथि में एव तीन शेष से जया तिथि में ४ शेष से रिक्ता तिथि में ५ शेष से पूर्ण तिथि में मरण कहना चाहिये॥ ८६॥

अथ तिथ्यादि ज्ञानमाह—

षड्भि र्भक्त्वा तिथिर्ग्राह्या वारो ग्राह्यश्च सप्तभि.।
पक्षेन्दुशेषिते लग्नं घटीभिश्च घटीं वदेत्॥ ८७॥

अथ प्रथमाङ्कवृन्दं षड्भिर्भक्त्वा शेषमिता तिथिर्ग्राह्या तथा तदंकवृन्दं सप्तभिर्भक्त्वा शेषमितो वारो रव्यादिवारो ग्राह्यः। तदङ्कवृन्दे पक्षेन्दुशेषिते द्वादशशेषिते सति लग्न वदेत्। तदंकवृन्दे घटीभिर्लग्नप्रमाणदण्डैर्भक्ते सति शेषांश्च घटीमर्थाच्छेषतुल्ये लग्नदण्डे मृत्युं वदेत्। अयं भाव.। तत्र तिथ्यानयनं पूर्वश्लोकार्धव्याख्यानावसरे स्फुटं वर्णितमेव। तदङ्कवृन्दे सप्तभक्ते रूपशेषे रविवासर। द्विशेषे चन्द्रवासर। त्रिशेषेकुज—वेदशेषे बुध। पञ्चशेषे गुरु। रसावशेषेशुक्रः। सप्तशेषे शनि। पक्षान्तरे "वारो ग्राह्यस्तुपञ्चभिरित्यन्ये" सर्वैकशेषे रविभौमौ द्वौ चेत्तदा चन्द्रबुधौ त्रयश्चेद्गुरुश्चत्वारश्चेत्तदा शुक्रः। पञ्चभिनावशेषे शनिरिति बोध्यम्। अथ लग्नानयनमुच्यते। तदङ्कवृन्दे, द्वादशभिर्भक्ते सति रूपशेषे मेषलग्नं तथा द्वादशावशेषेमीनलग्नमेवान्यदपि बोध्यम्। तदङ्कवृन्दे लग्नप्रमाणदण्डैर्भक्ते शेषमिते तल्लग्नदण्डे मृत्यु स्यात्। अत्र वारादौ नियमो नास्ति किन्तु तिथिपर्यन्तमेव मृत्युकारणं वदेदिति ज्योतिर्विदां सम्प्रदायः॥ ८७॥

भा॰ टी॰—पूर्व श्लोक से नन्दादि तिथियों का ज्ञान हुआ परन्तु किस

नन्दा तिथि या किस भद्रादि तिथि को मरण होगा इससे इसका ज्ञान बताते हैं। पूर्वोक्त जो प्रथमांक योग ( वयो राशि स्वरांक योग ) में ६ से भाग दे यदि १ शेष हो प्रथम नन्दा ( अर्थात् शुक्ल पक्ष के प्रतिपद ) को एवं प्रथम भद्रादि तिथियों ( शुक्लपक्ष के २, ३, ४, ५ तिथियों ) को मरण होगा एवं दो शेष हो तो द्वितीय नन्दादि तिथियों ( शुक्लपक्ष के ६।७।८।९।१० ) को मरण होगा। अर्थात् प्रथम श्लोक से नन्दा तिथि का ज्ञान हुआ पुनः पूर्वोक्त योग में ६ से भाग दिया तो यदि १ शेष रहा तो प्रथम नन्दा अर्थात् शुक्ल पक्ष के प्रतिपद को २ शेष से द्वितीय नन्दा अर्थात् शुक्लपक्ष के ६ षष्ठी को ३ शेष से शुक्ल पक्ष के ११ एकादशी को चार शेष से कृष्ण पक्ष के प्रतिपद को, ५ शेष से कृष्ण पक्षकी षष्ठी, ६ शेष हो तो कृष्ण पक्ष के ११ एकादशी को मरण कहना चाहिये एवं भद्रादि तिथियों का भी पृथक् पृथक् निश्चय करना चाहिये।

अथ वारानयन—पूर्वोक्त प्रथमांक योग में ७ से भाग दे यदि १ शेष रहे रविवार २ शेष से चन्द्रवार ३ शेष से मंगलवार एवं ४।५।६।७ शेष से क्रमशः बुध गुरु शुक्र शनिवार जानना चाहिये। परञ्च दैवज्ञगण प्रायः तिथि ज्ञान ही पर्यन्त आदेश करते हैं वार ज्ञान को नहीं आदेश हैं।

लग्नानयन ज्ञानमाह—एवं पूर्वोक्त योग में १२ का भाग दे यदि १ शेष बचे तो मेष तथा दो शेष से वृष एवं ३ तीन आदि शेष से मिथुनादि लग्न जानना चाहिये।

तथां घटीमिथ घटी वदेत् अर्थात् जब लग्न का ज्ञान हो गया तो पूर्वोक्त योगांक में लग्न प्रमाण दण्ड से भाग देकर शेष परिमित तुल्य उस लग्न में भी दण्ड गत जानना चाहिये।

अथ पूर्वोक्तयोगाङ्के क्षेपमाह—

एकं देयं तु हेयं वा वर्ण्यं वा इति सङ्ग्रहे।

न देयं वा न हेयं वा मध्ये चेच्छुक्ल कृष्णयोः॥ ८८॥

यदा जन्मकाले चन्द्रः पूर्णबलस्तदा साधिते तदङ्कवृन्दे चैकं योज्यम्।

यदा जन्मसमयेचन्द्रः क्षीणबलस्तदा तदङ्कवृन्दे चैकं हेयं शोध्यम् । एवं शुक्लकृष्णयोर्मध्ये यदा जन्म किन्तुसमबले चन्द्रे यदा जन्मतदा न योज्यं नशोध्यं किन्तु यथास्थितमेव । अत्र शुक्लदशमीमारभ्य कृष्णपञ्चमीं यावत्पूर्णबलश्चन्द्रः । एवंकृष्णषष्ठीमारभ्य दर्शान्तं यावत्क्षीणचन्द्र । शुक्लप्रतिपदारभ्य दशमी यावन्मध्यमश्चन्द्र । अत्र तिथिसत्त्व ग्रह इतिपाठान्तरे केचिदेवं वर्णयन्ति जन्मकाले वर्षाधिपश्चन्द्र पूर्णबलो वर्षेचैकं देयम् । यदि जन्मकाले वर्षेशसम्बन्धाभावश्चन्द्रः पूर्णबलस्तदा तिथावेकं देयम् । अन्यत्पूर्ववदिति ॥ ८८ ॥

भा० टी०-यदि जन्म काल में चन्द्रमा पूर्ण बलवान् हो तो पूर्वोक्त साधित योगांक में ( वयोराशि स्वरांक योग में ) १ एक योग करे । यदि क्षीण बल हो तो योगांक में १ घटाना चाहिये एवं शुक्ल कृष्ण के मध्य अर्थात् चन्द्रमा सम बल युक्त* हो तो न जोड़ना चाहिये और न घटाना चाहिये ।

अथ निधनस्य योगचक्रजातषोडशयोगानाह—

रविमन्दकुजे वर्षे राहौ वा द्वित्रि सस्थिते ।
सप्त शून्यानि चेत्तत्र मृत्युर्भवति नान्यथा ॥ ८९ ॥

पूर्वविहिते पताकोचक्रनये चेद्यदि रविमन्दभौमा वर्षेशाः स्युर्वा राहौ द्वित्रिसंस्थिते वर्षेशद्वये वा वर्षेशत्रये प्राप्ते सति पुनर्यदि योगजचक्रे सप्त शून्यानि भवन्ति तत्र वर्षे तदाऽवश्यं मृत्युर्भवति । अन्यथा कथितयोगाभाव स्तदा न मृत्यु ॥ ८९ ॥

तथा च सभा वाक्यम्—

सातशून्यबहुतरपापा ताहां जीवन नहि रे बापा ।
हँसे रोलै नाकरै भिक्षा अवश्य हँसा करै पयाना ॥ १ ॥

रे बापा अहो तात यत्रसातशून्यशून्यसप्तकं पुनर्यदि बहुतरपापा अयोपि वर्षेशाः पापाः स्युः । तहां तत्र जीवन प्राणो नहि नतिष्ठति । तत्र हंसा जीवो हसं हास्यं रोलैरोलन नाकरै न करोति किन्त्ववश्यं भिक्षास्वर्गाय पयाना प्रयाणं करै करोति ॥ १ ॥

* यथाहः—मासे तु शुक्ल प्रतिपत्प्रवृत्तेः पूर्वे शशी मध्यबलोदशाहे ।
श्रेष्ठो द्वितीयेऽल्प बलस्तृतीये सौम्यैश्च दृष्टो बलवान्सदैव ॥ १ ॥

भा० टी०—यदि पूर्व कथित तीनों पताकी चक्रों ( वेतुपताकी, केतु-कुण्डली और गुरु कुण्डली चक्र ) में सूर्य,मंगल और शनि वर्षेश हों अथवा दो या तीन प्रकार से राहु वर्षेश हो और जन्मादि कोष्ठ साधन चक्र में यदि सात शून्य हों तो अवश्य मृत्यु होती है। अन्यथा यदि कथित योग का अभाव हो तो मृत्यु नहीं होती है किन्तु अरिष्ट मात्र होता है ॥ ८९ ॥

भा० टी०—जहाँ ( जिस वर्ष ) सात शून्य हो तथा तीनों वर्षेश पाप ग्रह हों बाप रे बाप ! वहां ( उस वर्ष ) प्राण नहीं रहता है। वहां प्राण ( जीव ) हँसता खेलता नहीं है किन्तु यात्रा ( कूच ) कर जाता है ॥ ९ ॥

अथवा पाप संयुक्ते दश शून्यानि सन्ति चेत्।

तदा मृत्युं व्रजेदेव देवराज समोपि वा ॥ १० ॥

सं० टी० – अथ वा प्रकारान्तरेणपापसंयुक्ते किन्तु वर्षेशत्रये पापे सति पुनर्यदि योगचक्रे राहुरूपाणि दश शून्यानि भवेयुस्तदा देवराजसमोपि शक्रतुल्योपि नरो मृत्युं व्रजेत्प्राप्नोति वा निश्चयार्थे ॥ १० ॥

भा० टी०—अथवा वर्षेश तीनों पाप ग्रह हों तथा जन्मादि कोष्ठ साधन चक्रों में १० शून्य हो तो इस योग में इन्द्र तुल्य पराक्रमी व्यक्ति की भी मृत्यु होती है ॥ १० ॥

योगान्तरमाह—

आदौ चन्द्रो द्वि शून्यं च अन्ते कुज चतुष्टयम्।

मध्ये बुध त्रयं चैव गुरोर्मध्येच वा रविः ॥ ११ ॥

पापद्वये त्रये वापि संयुक्ते हायनेऽपि च।

मरणं तत्र वक्तव्यं नात्र कार्या विचारणा ॥ १२ ॥

आदौ प्रथमे चन्द्रस्ततो द्विशून्यं स्थानद्वये शून्यम्। पुनर्यदि चान्ते कुजचतुष्टयं चत्वारो मङ्गलाः। पुनर्यदि मध्ये मध्यकोष्ठे बुधत्रयं त्रयो बुधाः। तत्र गुरोमध्ये रविर्वा पुनर्यदि हायने वर्षे पापद्वये वा पापत्रये संयुक्ते सहिते सति। तदा तत्र वर्षे मरणं वक्तव्यं कथनीयम्। अत्र विचारणा न कार्या।

अत्रेदमवधेयम् । जन्मकोष्ठे चोर्ध्वस्थाने द्वितीयाङ्कस्थश्चन्द्रः । तथा जन्मकोष्ठे मध्याधः स्थानद्वयेऽपि शून्योपलक्षितो राहुः । अन्त्येसर्वाध:स्थाने कर्मादि कोष्ठ-चतुष्टयेपि त्र्यंकरूपो मङ्गलः । पुनर्यदि मध्ये जन्मरन्ध्रकोष्ठयोर्मध्ये किन्तु कर्मादिकोष्ठत्रयेपि मध्यस्थाने च चतुर्थांकरूपा बुधः । अवशेषस्थानेषु पञ्चसु ग्रहनियमाभाव । अत एवं जातं तच्चक्रस्य रूपम् ।

प्रथम चक्रम् ।

| जन्म | कर्म | आधान | पिण्ड | छिद्र |
|---|---|---|---|---|
| २ | | | | |
| ० | ४ | ४ | ४ | |
| ० | ३ | ३ | ३ | ३ |

सं० टी०—अथवा कर्मादिकोष्ठचतुष्टयेपि गुरोर्मध्ये रविस्यादर्थात्पूर्वा-न्त्यस्थानद्वये पञ्चांकरूपो गुरुस्तथा मध्यस्थाने चैकाङ्करूपो रवि । तदापि योगो भवत्यर्थाद्यथा प्रदर्शितकुजबुधनिवेशेन वशायत्फल तत्फलमेवार्कगुरुनिवेशजे योगे स्यात् । पुनर्यदि पताकीत्रयजानां वर्षेशानां मध्ये त्रयः पापा स्युर्वा द्वौ पापौ तदा मरणं स्यात् । अत्र वर्षेशानां मध्ये कथितपापाभावस्तदा मरणस्य विचारणा न कार्योऽर्थात्तन्मरणं न स्यात् । अत्र केचिदेवं वदन्ति । पूर्वोक्तपञ्चा-नियमस्थानेषु स्थानद्वये किन्तु कर्माधानकोष्ठयोः । वा कर्मपिण्डयोः । कर्मर-न्ध्रयोः । आधानपिण्डयोः । आधानच्छिद्रयोः । एकद्विशून्यांकोपलक्षित ।१।२।० पाप । अथवा पापत्रये स्थानत्रये पापः स्यादर्थात्कर्माधानपिण्डेषु । तथा कर्मा-धानच्छिद्रेषु । वा कर्मपिण्डच्छिद्रेषु । वा आधानपिण्डच्छिद्रेषु । यथा संभवं पापः स्यात् । तत्र हायने वर्षे मरणं कथनीयम् । एवं सति तत्राब्दे किं भवि-ष्यतीति विचारणा न कर्तव्या किन्त्ववश्यं तदा मृत्युर्भवति । परमेदं परमतं नादरणीयमिति सुधीभिर्विभाव्यम् । यतः "अथवा पापसंयुक्तेजायते संशयो-महान्" इति पापवर्षे संशये प्राप्ते सति तन्निर्णयाय वैसर्गिकचक्रत्रयानयनं विहि-

तमर्थात्पापवर्षाभावे सति तच्चक्रत्रयमपि न विचारणीयमिति । अत्र पूर्वोक्तमेव समीचीनं स्यादिति मम मतम् ॥ ९१ ॥ ९२ ॥

भा० टी०—जन्म कोष्ठ के प्रथम स्थान में चन्द्रमा हो ( अर्थात् २ अङ्क हो ) तथा शेष दो स्थानों शून्य हो तथा अन्त में चार मंगल हो अर्थात् कर्मादि चारों कोष्ठके तृतीय स्थानमें ३ सङ्ख्योपलक्षित मंगल हों और मध्यके तीन स्थानों में ४ सङ्ख्योपलक्षित बुध हो अर्थात् कर्म आधान और पिण्ड कोष्ठों के मध्य स्थान में बुध हो ( जो कि उपरोक्त चक्र में स्पष्ट है ) तथा शेष जो पांच स्थान है उनमें चाहे कोई ग्रह हो । अथवा कर्मादि चारों कोष्ठ में गुरु के मध्य में रवि हो अर्थात् उर्ध्वाधर स्थानों गुरु में हो तथा मध्य में रवि हो ( यह नीचे लिखे गये चक्र में स्पष्ट है ) ऐसी यदि चक्र की स्थिति हो और वर्ष में भी दो पापग्रह वर्षेश हों अथवा तीनों वर्षेश पापग्रह हों तब मृत्यु होती है । अन्यथा यदि ऐसे वर्षेश न हों तो मृत्यु नहीं होती है ॥ ९१ ॥ ९२ ॥

द्वितीय चक्रम् ।

| ज | क | आ | पि | ह्रि |
|---|---|---|---|---|
| २ | ५ | ५ | ५ | ५ |
| ० | १ | १ | १ | १ |
| ० | ५ | ५ | ५ | ५ |

योगान्तरमाह—

स्थानत्रये यदा सूर्यः सूर्यादौ शून्ययुग्मकम् ।
अवश्यं मरणं चैव तस्मिन् वर्षे भवेत्तदा ॥ ९३ ॥

यदा स्थानत्रये सूर्यः पताकात्रये वर्षेशाः सूर्याः । तथा यदि पञ्चस्वरेषु चादौ सूर्यस्तदग्रे सर्वत्र शून्यद्वये तदा तस्मिन् वर्षेऽवश्यं मृत्युः ॥ ९३ ॥

भा० टी०—तीनों ( पताकी चक्रों से ) वर्षेश रवि हो तथा जन्मादि पञ्चस्वरा चक्र में आदि स्थानों में सूर्य हो तथा शेष दो स्थान शून्य से युक्त हो तो उस वर्ष अवश्य मृत्यु होती है ॥ ९३ ॥

चक्रम्।

| ज | क | आ | पि | छि |
|---|---|---|---|---|
| १ | १ | १ | १ | १ |
| ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० |

योगान्तरमाह—

बुधेऽपि शून्ययुगले रवौ वर्गेशतां गते।
बुधेऽप्यन्तर्गते चैव मरणं तत्र संशयः॥ ९४॥

यदि रवौ वर्गेशतां गते पताकीत्रयेऽपि वर्गेशः सूर्यः। तथा पञ्चस्वरेषु चादौ बुधे सति ततः शून्ययुगले शून्यद्वयं स्यादयमेको योगः। यदि पञ्चस्वरेषु मध्ये बुधस्तथाऽऽद्यन्ते च शून्यद्वयं पुनर्यदि पताकीत्रयोत्थो वर्गेशः सूर्यः। तदा मरणं स्यादिति संशयो न। तथोक्तमन्यैः "ज्ञः शून्ययुगमध्ये बुधः खमध्येऽर्के-ऽब्देश्वरे तत्र निमीलनं स्यात्। खमध्ये शून्य द्वयमध्ये बुधः। निमीलनं मरणं स्यादन्यत्सुगमम्॥ ९४॥

भा० टी०—यदि तीनों पताकी चक्रों में वर्गेश रवि हो तथा यदि पञ्च-स्वरा चक्र में सभी आदि स्थानों में बुध हो तथा शेष स्थानों में शून्य हो तो मृत्यु होती है। अथवा पञ्चस्वरा चक्र में सभी मध्य स्थानों में बुध हो तथा शेष पूर्वापर सभी स्थान शून्य से युक्त हो (तथा तीनों प्रकार से वर्गेश रवि हो) तो अवश्य मृत्यु होती है॥ ९४॥

प्रथम चक्रम्।

| जन्म | कर्म | आधान | पिण्ड | छिद्र |
|---|---|---|---|---|
| ४ | ४ | ४ | ४ | ४ |
| ० | ० | ० | ० | ० |
| ० | ० | ० | ० | ० |

द्वितीय चक्रम्।

| जन्म | कर्म | आधान | पिण्ड | छिद्र |
|---|---|---|---|---|
| ० | ० | ० | ० | ० |
| ४ | ४ | ४ | ४ | ४ |
| ० | ० | ० | ० | ० |

अथ योगान्तरमाह—

गुरौ शून्यद्वये प्राप्ते कुजश्चान्ते भवेद्यदि।
प्राणत्यागो भवेत्तत्र पापे वर्षेशतां गते॥ ९५॥

पापे वर्षेशतां गते पताकीत्रये पापा वर्षेशा । तथा यदि पञ्चस्वरमध्ये चादौ गुरौ शून्यद्वये प्राप्ते गुरु शून्यद्वयसंयुतः। तथाऽन्ते छिद्रकोष्ठे सर्वाधःस्थाने च कुज स्यात्। तत्र प्राणत्यागो भवेत्॥ ९५॥

भा० टी०—यदि तीनों पताकी चक्रो में वर्षेश पापग्रह हों तथा यदि पञ्चस्वरा चक्र में आदि कोष्ठ ( जन्म कोष्ठ ) में बृहस्पति दो शून्य से युक्त हो तथा अन्त में अर्थात् छिद्र कोष्ठ के अन्त में ) यदि मंगल हो तो अवश्य मृत्यु होती है॥ ( शेष स्थानों में कोई ग्रह हो॥ ९५॥

| जन्म | कर्म | आधान | पिण्ड | छिद्र |
|---|---|---|---|---|
| ५ | | | | |
| ० | | | | |
| ० | | | | ३ |

तथा खनावाक्यम्—

गुरु प्रथम दुइशून्य आइसे अन्त्ये कुज काले पडे।
हँसे खेले नाकरे भिन्ना अवश्य हँसा करे पयाना॥ २॥

प्रथमगुरु प्रथमं गुरुः । ततो दुइ शून्य शून्यद्वयं आइसे आयाति । तथा अन्त्ये कुज छिद्रकोष्ठेऽधः स्थाने मङ्गलः । तदा कालपैसे तस्य नरस्य कालप्राप्त किन्तु मरणम् । अन्यत्पूर्ववत् ॥ २ ॥

भा० टी०—उपरोक्त अर्थ से तथा चक्र से स्पष्ट है ॥ २ ॥

योगान्तरमाह—

शून्यद्वये कुजे प्राप्ते चान्त्येपि कुजसम्भवे ।
विशेषेण मृतिर्ज्ञेया वर्षे वै पाप संयुते ॥ ९६ ॥

कुजे शून्यद्वये प्राप्ते पञ्चस्वरेष्वादौ शून्यद्वयविशिष्टः कुजः । तथाऽन्ते छिद्रकोष्ठेऽधः स्थानेपि कुजसम्भवे सति कुजस्य स्थितिः स्यात् । पुनर्यदि पापसंयुते वर्षे पताकीत्रये पापा अब्देशाः स्युः । तत्र विशेषेण मृतिर्ज्ञेया । तथान्यैरुक्तम् "शून्ये कुजश्चान्त्यगतः कुजश्चेति ॥ ९६ ॥

भा० टी०—यदि पञ्चस्वरा चक्र में आदि स्थान में मंगल शून्य द्वय करके युक्त हो तथा अन्त में भी मंगल हो तथा यदि तीनों पताकी चक्र में पाप ग्रह वर्षेश हों तो अवश्य मृत्यु होती है ( शेष स्थानों में कोई ग्रह हों ) ॥ ९६ ॥

चक्रम् ।

| जन्म | कर्म | आधान | पिण्ड | छिद्र |
|---|---|---|---|---|
| ३ | | | | |
| ० | | | | |
| ० | | | | ३ |

योगान्तरमाह—

शुक्रे शून्यद्वये प्राप्ते वर्षे वै पापसंयुते ।
द्वितीयस्वरसंयोगे मरणं तस्य निश्चितम् ॥ ९७ ॥

पापसंयुते वर्षे पताकीत्रयोत्था वर्षेशाः पापाः । पुनर्यदि द्वितीयस्वरसंयोगे शून्यद्वये प्राप्ते शुक्रे सति किन्तु कर्मकोष्ठस्वरे चादौ शुक्रस्तथा शून्यद्वयं च स्यात् तदा तस्य मरणं निश्चितमिति । ग्रन्थान्तरे चास्मिन् योगे कुजसम्बन्ध उक्तः शुक्रः स्वयुग्मं रुधिरोऽयवेति ॥ ९७ ॥

भा० टी०—यदि तीनों पताकी चक्र से वर्षेश पाप ग्रह हों तथा द्वितीय स्वर अर्थात् कर्म स्वर के कोष्ठ में शुक्र दो शून्य से युक्त हो तो अवश्य मृत्यु होती है ॥ ९७ ॥

| जन्म | कर्म | आधान | पिण्ड | छिद्र |
|---|---|---|---|---|
| | शु<br>०<br>० | | | |

शेष कोष्ठों में कोई ग्रह हो ।

योगान्तरमाह—

प्रथम त्रीणी शून्यानि छिद्रे च कुजसंस्थितिः ।
वर्षं तत्क्लेशदं ज्ञेयं शुभयोगे शुभप्रदम् ॥ ९८ ॥

प्रथमं जन्मकोष्ठे त्रीणि शून्यानि चोर्ध्वमध्याध स्थानेषु शून्यानि । तथा यदि छिद्रकोष्ठेऽध स्थाने कुजसस्थितिर्मङ्गलस्यावस्थानं स्यात् । तथाऽब्देशाश्च पापास्तदा तद्वर्षं क्लेशदं ज्ञेयम् । तत्र योगे शुभयोगे सति किन्तु यदा वर्षेशाः शुभास्तदा तद्वर्षं शुभप्रदं ज्ञेयमिति ॥ ९८ ॥

भा० टी०यदि पञ्च स्वरा चक्र के, जन्म कोष्ठ में तीनों स्थान शून्य से युक्त हो तथा छिद्र कोष्ठ के अन्त में मंगल हो तब यदि वर्षेश पाप ग्रह हों तो क्लेश होता है अन्यथा यदि वर्षेश शुभ ग्रह हों तो वह वर्ष शुभ प्रद होता है ॥ ९८ ॥

| जन्म | कर्म | आधान | पिण्ड | छिद्र |
|---|---|---|---|---|
| ० | | | | |
| ० | | | | |
| ० | | | | २ |

शेष कोष्ठो में कोई ग्रह हो ।

पुनर्योगान्तरमाह--

दश शून्यानि यत्र स्युर्वर्षे ये गुरु शुक्रयोः ।

क्लेश मात्रं विजानीयाज्जीवने नात्र संशयः ॥ ९९ ॥

गुरुशुक्रयोर्वर्षे किन्तु गुरुशुक्रौ वर्षेशौ तथा यदि पञ्चस्वरेषु यत्र कुत्रचि दश शून्यानि स्युः । तदा तत्र वर्षे क्लेशमात्रं विजानीयात् । तत्र जीवने प्राणधारणे संशयो न स्यात् । अर्थान्मृत्युर्नेति बोध्यम् ॥ ९९ ॥

भा॰ टी॰—जिस वर्ष में वर्षेश बृहस्पति तथा शुक्र हो तथा पञ्चस्वरा चक्र में जन्मादि सभी कोष्ठों में मिलकर दश शून्य हो तो ऐसे वर्ष में क्लेश मात्र होता है ॥ मृत्यु नही होती है ॥ ९९ ॥

योगान्तरं दर्शयति—

छिद्रे बुधे द्वये शून्ये जन्मनि शद्वये कुजे ।

शुक्रे कर्मणि शून्ये द्वे मृत्यु र्भवति नान्यथा ॥ १०० ॥

छिद्रे छिद्रकोष्ठे चादौ बुधे ततो मध्याधः स्थाने शून्ये द्वये सति तथा जन्मनि जन्मकोष्ठे शद्वये बुधद्वये कुजे सति किंतु कुजः स्यात् । तथा शुक्रे कर्मणि कर्मकोष्ठे द्वे शून्ये शून्यद्वयं स्यात् । तदा मृत्युर्भवति । अन्यथा न स्यात् ॥ १०० ॥

भा॰ टी॰—यदि पञ्चस्वरा चक्र के छिद्र कोष्ठ के प्रथम स्थान में बुध और मध्य तथा अन्त कोष्ठ में शून्य हो तथा जन्म कोष्ठके प्रथम द्वितीय स्थान में बुध तृतीय स्थान में मंगल और कर्म कोष्ठमें शुक्र दो शून्य करके युक्त हो तो अवश्य मृत्यु होती है अन्यथा नही होती है ॥ १०० ॥

चक्रम्।

| जन्म | कर्म | आधान | पिण्ड | छिद्र |
|---|---|---|---|---|
| ४ | ६ | | | ४ |
| ४ | ० | | | ० |
| ३ | ० | | | ० |

शेष कोष्ठो में कोईग्रह हो।

योगान्तरमाह—

**जन्मन्यर्कगुरु कर्मण्यथ राहु दिवाकरौ।**
**आधाने मन्द भौमौ च जन्तोर्मरणमादिशेत् ॥ १०१ ॥**

जन्मनि जन्मकोष्टेऽर्कगुरू तथा कर्मणि कर्मकोष्ठे राहुदिवाकरौ स्याताम्। पुनर्यदि चाधाने मन्दभौमौ शनिमङ्गलौ स्त। अत्रापि यदि वर्षेशाः पापाः स्युरित्यनुक्तमपि बोध्यम्। तदा जन्तोः पुरुषस्य मरणं वदेत् ग्रन्थान्तरेप्युक्तम् 'जनुषि प्रजपूज्यौ क्रमेण राहुर्भानुश्च कर्मण्यथ निजरविजौ चेत्तृतीये स्वरे स्यान्मृत्यु रिति' ॥ १०१ ॥

*यदि पञ्चस्वरा चक्र के जन्म कोष्ट में सूर्य, बृहस्पति कर्म कोष्ट में राहु सूर्य और आधान कोष्ट में यदि शनि मगल हो तो ( यदि वर्षेश पाप ग्रह हों तो ) मरण होता है ॥ १०१ ॥*

चक्रम्।

| जन्म | कर्म | आधान | पिण्ड | छिद्र |
|---|---|---|---|---|
| १ | ० | ७ | | |
| ५ | १ | ३ | | |

शेषकोष्ठो कोईग्रह हो।

योगान्तरं दर्शयति—

विधूराहू विधूश्चेति योगो यद्यन्योन्य सम्भवे ।

गुरुचन्द्रशनेर्वर्पे तदापि मृत्युमादिशेत् ॥ १०२ ॥

अत्र पञ्चसु कोष्ठेषु विधुराहू तथा विधुः पुनश्चन्द्र इत्येषां परस्परसम्भवे सति यदि योगः । अर्थात्पञ्चसु कोष्ठेषु प्रथमं चन्द्रस्तदग्रे राहुस्तदग्रे चन्द्र इति । तथा गुरुचन्द्रशनेर्वर्षे गुरुचन्द्रशनीनां वर्षे तदापि मृत्युमादिशेत् । कथयेत् ॥ १०२ ॥

भा० टी०—यदि पञ्चस्वरा चक्र में जन्मादि सभी कोष्ठों में क्रमशः चन्द्रमा राहु और चन्द्रमा हों तथा बृहस्पति चन्द्रमा और शनि वर्षेश हों तो अवश्य मृत्यु होती है ॥ १०२ ॥

चक्रम् ।

| जन्म | कर्म | आधान | पिण्ड | छिद्र |
| --- | --- | --- | --- | --- |
| २ | २ | २ | २ | २ |
| ० | ० | ० | ० | ० |
| २ | २ | २ | २ | २ |

योगान्तरमाह—

पापद्वयान्विते वर्षे शून्यषट्कं भवेद्यदि ।

कुजश्चान्ते भवेद्यस्य तस्य मृत्युर्न संशयः ॥ १०३ ॥

*वर्षे पापद्वयान्विते सत्यर्थात्पताकीत्रयोत्थानां वर्षेशानां मध्ये पापद्वयं तथा यदि पञ्चस्वरेषु राहुरूपं शून्यषट्कं भवेत् । तथा यदि चान्ते छिद्रकोष्ठेऽधः स्थाने कुजो मङ्गलः । एवं यस्य भवेत्तस्य तदा मृत्युः स्यादिति संशयो न स्यात् ॥ १०३ ॥*

भा० टी०—यदि पताकी चक्रों से दो पाप ग्रह वर्षेश हों ( तीनों वर्षेशों में से कोई दो पाप ग्रह वर्षेश हों ) तथा पञ्चस्वरा चक्र के जन्मादि सभी कोष्ठों में मिलकर ६ शून्य हों और छिद्र कोष्ठ के अन्त में यदि मंगल हो तो अवश्य मृत्यु होती है इसमें सन्देह नहीं ॥ १०३ ॥

तथा च खनावाक्यम्—

दुइ पाप पट् शून्य तदीशाः अन्ते कुज काल परे ।

हँसे खेले नाकरे मिछा अवश्य हँसा करे पयाना ॥ ३ ॥

दुइ पाप वर्षेशद्वयं पापरूपं तथा पट्शून्यं शून्यषट्कं यथा अन्ते कुज छिद्रकोष्ठाधः स्थाने कुजो भवेद् । तदा कालपरे मृत्युर्भवेत् । उत्तरार्धस्यार्थः पूर्ववदवधेयः ॥ ३ ॥

स्पष्टम् ।

योगान्तरं दर्शयति—

बुधत्रयं कुजद्वयं दश शून्यं भवेद्यदि ।

मन्दार्कार युते वर्षे राहौ वा स्यात्तदा मृतिः ॥ १०४ ॥

वर्षे मन्दार्कारयुते पताकीत्रये क्रमेण शनिरविभौमा वा राहुर्वर्षेशः । तथा पञ्चस्वरपुरे बुधत्रयं तथा स्थानद्वये भौमद्वयम् । तथा यदिदशशून्यञ्च । तदा मृतिः स्यात् ॥ १०४ ॥

भा० टी०—यदि तीनों पताकी चक्र में क्रमशः शनि सूर्य और मंगल वर्षेश हों अथवा राहु वर्षेश हो तथा यदि पञ्चस्वरा चक्र के जन्मादि कोष्ठों में कहीं भी तीन स्थान में बुध और दो स्थान में मंगल हो और शेष दश कोष्ठों में शून्य हो तो अवश्य मृत्यु होती है ॥ १०४ ॥

तथा च खनावाक्यम्-

तीनबुध दुइ मङ्गल आइसे लिखिआ दश शून्य जहार आइसे ।

शनि रवि मङ्गल राहु गणना सेइ वत्सर मरण बोले खना ॥ ४ ॥

तीन बुध बुधत्रयं [illegible] मङ्गल मङ्गलद्वयम् । दशशून्य दशशून्यानि लिखिआ रचयित्वा जहार यस्य आइसे आगच्छेयुः । शनिरविमङ्गलराहुगणना शनिरविमङ्गलानां वा राहोश्चाब्देश मध्ये गणना स्यात् । सेइ वत्सर तस्मिनेव वर्षे मरणबोले मरणं वदति ॥ ४ ॥

भा० टी०—पूर्व श्लोक के अर्थ से स्पष्ट है ॥ ४ ॥

योगान्तरमाह—

पञ्च स्वरे यदा भौमः पञ्चमः सप्तमो भवेत् ।

पाप त्रयान्विते वर्षे तथैव मृत्युमादिशेत् ॥ १०५ ॥

पञ्चस्वरे पञ्चस्वरमध्ये यदा भौम पञ्चमः पञ्चमस्थानगतः किन्तु कर्मकोष्ठस्य मध्यस्थानेस्थितः । तथा सप्तमः सप्तमस्थानगतः क्रियाधानकोष्ठस्योर्ध्वस्थाने स्थितो भवेत् । तथा यदि पापत्रयान्विते वर्षे सत्यर्थात्पताकीत्रयोरपा अब्देशाः पापाः स्युः । तथैव मृतिमादिशेत् । तथान्यैरप्युक्तम् ।

"भौमो यदा कर्मणिमध्यग स्यात्कोष्ठे तृतीये प्रथमो भवेत्सः ।

मृत्युमजेदेवहि हायनेऽस्मिन् तथैव पापत्रयसंयुतेऽब्द इति" ॥ १०५ ॥

तथा च खनावाक्यम्—

मङ्गल सप्तम पञ्चम पा प्रमाण,

जीवन मरण स्फुट तत्क्षण जान ॥ ५ ॥

स्पष्टम् ॥ ५ ॥

भा० टी०—यदि पञ्चस्वरा चक्र के पञ्चम तथा सप्तम स्थान में ( अर्थात् कर्म कोष्ठ के मध्य में और आधान कोष्ठ के प्रथम स्थान में ) यदि मंगल हो और पताकी चक्रों से यदि तीनों वर्षेश पाप ग्रह हों तो उस वर्ष में अवश्य मृत्यु होती है ॥ १०५ ॥

विशेषमाह—

पापग्रहदशायान्तु पापस्यान्तर्दशा यदि ।

अरियोगे भवेन्मृत्यु मित्रयोगे न सशय ॥ १०६ ॥

यदा पापग्रहस्य महादशायां पापग्रहस्यैवान्तर्दशा भवेत् । तद्ग्रहद्वयस्यारियोगे सत्यर्थात्तयोर्दशान्तर्दशास्वामिनोः शत्रुत्वे मृत्युर्भवेत् । यथा यदि तयोर्मित्रयोगे मित्रत्वे सति संशयो न स्यादर्थान्मृत्युर्न स्यात् । किन्तु क्लेशमात्रं स्यात् । अत्र शुभदशायामप्यरियोगे मृत्युः स्यादिति ॥ १०६ ॥

भा० टी०—यदि पाप ग्रह की दशा में पाप ग्रह की अन्तर्दशा हो तथा दशा नाथ और अन्तर्दशा के स्वामी परस्पर शत्रु हो तो उस अन्तर्दशा में मृत्यु होती है। अन्यथा यदि दशा और अन्तर्दशा के स्वामियों परस्पर मित्रता हो तो मृत्यु नहीं होती है परन्तु क्लेश अवश्य होता है॥ १०६॥

उपसंहार माह—

ज्योतिर्विदः प्रपश्यन्तु ग्रहाणां सुविचारकाः।
पञ्चस्वरादितो यद्वै सङ्गृहीतं सुनिश्चितम्॥ १०७॥

ग्रहाणां सुविचारका ज्योतिर्विदः ज्योतिः शास्त्रज्ञा इदं प्रपश्यन्तु। पञ्चस्वरादितः पञ्चस्वरावलम्बनवशान्मया प्रजापतिदासनाम्ना गणकेन यच्छुभाशुभं सुनिश्चितं सुनियतं सङ्गृहीतमिति। अत्रायमाशयः। जन्मलग्नस्य पापविद्धे पापग्रहाणां यामार्धदण्डयोर्जन्म चायं सर्वमरणयोगानां सहायकः। तथा विश्वेश्वरोपि—

"यत्राब्दे बहवः क्रूराः सौम्या न्यूनाश्च यत्र हि।
तत्र क्लेशं विजानीयात्कार्यमात्रेन संशयः॥ १॥
स्वोच्चादिपदगाः क्रूराः सदा सफलदायकाः।
नीचादिपदगाः सौम्या न शुभाः सर्वथा नृणाम्॥ १०७॥

इति श्रीप्रजापतिदासविरचितः पञ्चस्वराख्यो ग्रन्थः समाप्तः।



भा० टी०—मैं "प्रजापति दास" नामक ज्योतिषी अकारादि पाँचों स्वरों के आधार पर जो कुछ संग्रह करके निश्चय किया हूँ उसे श्रेष्ठ ज्योतिषी लोग विचार पूर्वक गौर से देखें। अर्थात् मेरे परिश्रम को सफल करें॥ शुभम्॥

इतीह मृत्यु निर्णये चलाख्यचक्रसम्भवे॥
प्रपूर्णतां सुबोधिनी मनीषितोषकारिणी॥ १॥



चन्द्रसूर्यगृहे राहुश्चन्द्रः सूर्ययुतो यदि ।
सौरिभौमेक्षितं लग्नं पक्षमेकं न जीवति ॥ १ ॥

अथ बहुषु पुस्तकेषु स्थिताः श्लोकाः सङ्गृहीतरूपा ये तानपि प्रसङ्गात् व्याख्यास्यामः ।

यस्य जन्मकाले राहुश्चन्द्रसूर्यगृहे कर्कसिंहराशौ स्थितः । तथा यदि चन्द्रः सूर्ययुतः सूर्येण सहितः । तथा यदि लग्नं जन्मकालिकलग्नं सौरिभौमेक्षितं शनिमङ्गलाभ्यां दृष्टम् । तदा स च बालकः पक्षं जन्मतः पञ्चदशदिनं यावन्न जीवति किन्तु पञ्चदशदिनाभ्यन्तरे प्राणवियोगं करोति ॥ १ ॥

भा० टी०—जिस के जन्म समय राहु कर्क अथवा सिंह राशि का हो चन्द्रमा सूर्य से युक्त हो और लग्न शनि तथा मंगल से दृष्ट हो तो वह बालक १५ दिन के अन्दर ही मृत्यु को प्राप्त करता है ॥ १ ॥

मात्रासहारिष्टयोगः—

कर्मस्थाने स्थितः सौरिः शत्रुस्थाने कलानिधिः ।
क्षितिजः सप्तमस्थाने स मात्रा म्रियते शिशुः ॥ २ ॥

सं० टी० सौरिः शनिः कर्मस्थाने लग्नाद्दशमस्थाने स्थितः । तथा यदि कलानिधिश्चन्द्रः शत्रुस्थाने स्थितः । पुनर्यदि क्षितिजो मङ्गलः सप्तमस्थाने गतः । एवं विधे योगे जातः शिशुः स मात्रा मातृसहितो म्रियते प्राणवियोगं करोति ॥ २ ॥

भा० टी०—जिस के जन्म समय में शनि दशम स्थान में तथा चन्द्रमा षष्ठ में और मंगल सप्तम स्थान में स्थित हो उस बालक की माता के साथ मृत्यु होती है ॥ २ ॥

अरिष्टयोगमाह—

लग्ने भास्करपुत्रश्च निधने चन्द्रमा यदि ।
तृतीयस्थो यदा जीवः स याति यममन्दिरम् ॥ ३ ॥

यदि भास्करपुत्रः शनिर्लग्ने जन्मलग्ने स्थितः । पुनर्यदि चन्द्रमा निधनेऽष्टमे स्थितः । पुनर्यदा जीवो बृहस्पतिस्तृतीयस्थः । यस्यैवं विधे योगे जन्म स यममन्दिर यमगृहं मृत्युं याति प्राप्नोति ॥ ३ ॥

जिसके जन्म समय लग्न में शनि, अष्टम में चन्द्रमा और तृतीय स्थान में यदि बृहस्पति स्थित हो तो वह बालक शीघ्र मृत्यु को प्राप्त करता है ॥३॥

अन्यच्च—

होरायाः सप्तमे सूर्यः सप्तमे च शनैश्चरः ।

एकादशे गुरुः शुक्रो मासमेकं न जीवति ॥ ४ ॥

सूर्यो होरायाः किन्तु लग्नात्सप्तमे स्थितः । पुनर्यदि शनैश्चरः सप्तमे स्थितः । गुरुः शुक्रश्चैकादेश स्थितः । तदा शिशुरेकं मासं न जीवति किन्तु मासाभ्यन्तरे जातस्य मृत्यु ः ॥ ४ ॥

भा० टी०—जिस के जन्म समय जन्म लग्न से सप्तम में सूर्य शनि और एकादश में यदि गुरु शुक्र हों तो वह बालक १ मास के अन्दर ही मृत्यु को प्राप्त करता है ॥ ४ ॥

अन्यच्च—

लग्नसंस्थौ शनिकुजावष्टमस्थो यदाशशी ।

भवेत्षष्ठे यदा जीवो जीवनं तस्य दुर्लभम् ॥ ५ ॥

शनिकुजौ शनिमङ्गलौ लग्नसंस्थौ स्तः । तथा यदि शशी चन्द्रोऽष्टमस्थः । तथा यदा जीवः षष्ठे स्थितः । षष्ठेऽष्टमे भवेज्जीवो ११ इति पाठान्तरे जीवः षष्ठेऽष्टमे गतः । एवं विधे योगे यस्य जन्मतस्य जीवनं दुर्लभं स्याद्यो्सौ न जीवति ॥ ५ ॥

भा० टी०—जिस के जन्म समय लग्न में शनि मंगल और अष्टम में चन्द्रमा तथा षष्ठ में यदि बृहस्पति हो तो उस का जीवन दुर्लभ है ॥ ५ ॥

अन्यच्च—

अरिगेहस्थितश्चन्द्रो भास्करोपि यदा भवेत् ।

मार्कण्डेयसमोपि स्यान्मासमेकं न जीवनं ॥ ६ ॥

चन्द्रस्तथा भास्करः सूर्यो यदाऽरिगेहस्थितः षष्ठस्थाने गतस्तदा मार्कण्डेय-समोपि मार्कण्डेयेन मुनिना दीर्घायुषा तुल्योपि नर एकं मासं न जीवति ॥ ६ ॥

भा० टी०--जिस के जन्म समय सूर्य तथा चन्द्रमा युगपत् यदि षष्ट स्थान में हो वह एक मास जीवित नहीं रहता है, यदि मार्कण्डेय मुनिके समान भी दीर्घायु पुरुष का यदि इस योग में जन्म हो तो वह भी एक मास के अन्दर ही सुर लोक को प्राप्त करता है ॥ ६ ॥

अन्यच्च—

अष्टमस्थो यदा पापः सौम्यश्चद्वादशे स्थितः ॥

तदा मृत्यु व्रजेदेव देवराज समोयदि ॥ ७ ॥*

यदा पापः पापग्रहो लग्नादष्टमस्थः । पुनर्यदा सौम्यः शुभग्रहो द्वादशे स्थितः । षष्ठाष्टमे १ इति पाठान्तरम् । तदा देवराजसम इन्द्रतुल्योपि नरो मृत्युं व्रजेत् ॥ ७ ॥

भा० टी०--यदि जन्म समय अष्टम में पाप ग्रह तथा द्वादश में शुभ ग्रह स्थित हों तो इन्द्र के समान पराक्रमी पुरुष भी मृत्यु को प्राप्त करता है ॥ ७ ॥

पितृभ्र्यांसहमृत्युयोगः—

षष्टाष्टमगतश्चन्द्रो रविजः सप्तमे स्थितः ॥

पितृमातृ विनाशो स्यान्मास मेकं न जीवति ॥ ८ ॥

चन्द्रः षष्ठाष्टमगतः । तथा यदि रविजः शनिः सप्तमस्थितः । तदैवं विधे योगे जातः शिशुः पितृमातृविनाशी किन्तु पितृमातृविनाशकरः स्यात्तथा स्वयमप्येकं मासं न जीवति ॥ ८ ॥

जिस के जन्म समय लग्न से षष्ट अथवा अष्टम में चन्द्रमा और सप्तम में यदि शनि हो तो वह बालक माता पिता का नाश करके स्वयं भी १ मास के अन्दर ही मृत्यु को प्राप्त करता है ॥ ८ ॥

---

* षष्टाष्टमे यदा पापः इति पाठान्तरम् ॥

अरिष्टयोगमाह—

शुभे लग्ने यदा जातश्चाष्टमे च निशाकरः ॥
शनैश्चरश्च बन्धुस्थो द्विमासे मृत्युमिच्छति ॥ ९ ॥

सं० टी०—यदा शुभे शुभराशौ लग्ने जातः उत्पन्नो नरो भवेत्। तथा यदि निशाकरश्चन्द्रोऽष्टमे गतः। पुनर्यदि शनैश्चरो बन्धुस्थः "मृत्युस्थः" इति पाठान्तरे चाष्ठमगतः। तदा स च नरो द्विमासे मृत्युमिच्छति किन्तु जन्मतो मासद्वयं यावन्मृत्युं प्राप्नोति ॥ ९ ॥

भा० टी०—यदि जन्म लग्न में शुभ ग्रह की राशि हो तथा अष्टम में चन्द्रमा और चतुर्थ में शनि हो तो २ मास के अन्दर ही मृत्यु होती है ॥९॥

अन्यच्च—

यस्य जन्मविलग्नस्थाः सूर्यशुक्रशनैश्चराः ॥
द्वादशस्थो गुरुश्चैव पञ्चमासं न जीवति ॥ १० ॥

यस्य सूर्यशुक्रशनैश्चरा जन्म लग्नस्थाः स्युः। तथा यदि गुरुर्द्वादशस्थः स च पञ्चमासं नजीवत्यर्थात्पञ्चमासाभ्यन्तरे मृत्युं प्राप्नोति ॥ १० ॥

जिस के जन्म समय जन्म लग्न में सूर्य शुक्र तथा शनैश्चर और द्वादश स्थान में यदि गुरु हों तो वह बालक ५ मास के अन्दर मृत्यु को प्राप्त होता है ॥ १० ॥

अथ मातृरिष्ट योगमाह—

पूर्वमुक्तं शिशोरिष्टं मातृरिष्टमथोच्यते ॥
दिवा शुक्रो भवेन्माता रात्रौ माता च चन्द्रमा ॥ १ ॥

पूर्वार्धं स्पष्टम्। यस्य दिवा दिवसे जन्मतस्य शुक्रो माता किन्तु मातृकारकः स्यात्। एवं यस्य रात्रौ जन्म तस्य चन्द्रमा माता मातृसंज्ञकः स्यात् ॥ १ ॥

भा० टी०—प्रथम बालारिष्ट कह कर अब मातृरिष्ट योगों को कहता हूँ। यदि दिन में जन्म हो तो शुक्र मातृकारक और यदि रात्रि में जन्म हो तो चन्द्रमा मातृ कारक होते हैं ( अथवा यों कह सकते हैं कि दिन में शुक्र माता संज्ञक तथा रात्रि में चन्द्रमा माता संज्ञक होते हैं ) ॥ १ ॥

प्रसवे च दिवाभागे शुक्रे च पापसंयुते ॥

अथवा पाप सन्दृष्टे माता च म्रियते ध्रुवम् ॥ २ ॥

दिवाभागे दिवसे प्रसवे जन्मनि सति । तथा शुक्रे पापसंयुते पापग्रहसहिते सति । अथवा शुक्रे पापसन्दृष्टे पापग्रहदृष्टे सति । जातस्य माता ध्रुवं निश्चितं म्रियते ॥ २ ॥

यदि दिन में जन्म हो और शुक्र पाप ग्रह युक्त अथवा पाप ग्रह से दृष्ट हो ( शुभ ग्रह से युक्त दृष्ट न हो ) तो जातक के माता की निश्चय मृत्यु होती है ॥ २ ॥

आत्मगेहस्थितः शुक्र पापान्तः पापसंयुतः ।

अथवा पापसन्दृष्टो माता च म्रियते ध्रुवम् ॥ ३ ॥

यदि शुक्र आत्मगेहस्थितः स्वराशावर्थाद्वृषतुलाराशौ गत । तथा पापान्तः पापग्रहमध्यगतस्तथा पापसंयुतः । अथवा तादृशः शुक्रः पापसन्दृष्ट । तदा ध्रुवं निश्चितं माता म्रियते ॥ ३ ॥

भा० टी०—यदि वृष अथवा तुला राशि स्थित शुक्र पाप ग्रहोंके मध्य में हो पाप ग्रह से युक्त हो अथवा पाप ग्रह से दृष्ट हो तो निश्चय माता की मृत्यु होती है ॥ ३ ॥

प्रसवे रात्रिसमये चन्द्रः पापग्रहेक्षितः ।

माता च म्रियते तस्य यदि पापसमन्वितः ॥ ४ ॥

सं० टी०—रात्रिसमये प्रसवे सति तथा चन्द्रः पापग्रहेक्षितः पापग्रहसन्दृष्ट । पुनर्यदि पापसमन्वितः पापग्रहयुत । यस्यैवं विधो योगो जनौ भवेत्तस्य माता म्रियते ॥ ४ ॥

भा० टी०—जिसका जन्म रात्रि के समय हो और चन्द्रमा पाप ग्रह से दृष्ट होकर पाप ग्रह से युक्त हो तो उसकी माता मृत्यु को प्राप्त होती है ॥४॥

"आत्मगेह स्थितः शुक्र" इति पूर्वोक्तस्य भङ्गमाह—

आत्मगेहस्थितः शुक्रो पापे च परक्षेत्रगे ।

शुभग्रहाः प्रपश्यन्ति रिष्टभङ्गो भवेत्तदा ॥ ५ ॥

सं० टी०—यदि शुक्र आत्मगेहस्थितः स्वराशौ स्थितः । पुनर्यदि पापे पापग्रहे परक्षेत्रगे स्वराश्यन्यराशिगते सति । तत्र यदि तं शुक्रं शुभग्रहाः प्रपश्यन्ति विलोकयन्ति । तदा "आत्मगेहस्थितः शुक्रः पापान्तः पापसंयुतः" इति योरिष्टस्तस्य भङ्गो नाशो भवेत् ॥ ५ ॥

भा० टी०—यदि शुक्र स्वगृह का हो परन्तु पाप ग्रह अन्य की राशियों में हों तथा शुक्र शुभ ग्रहों से दृष्ट हो तो "आत्मगेह स्थितः शुक्रो" इत्यादि पूर्वोक्त श्लोक से कहे गये अरिष्ट का नाश होता है ॥ ५ ॥

अथवा क्षीणचन्द्रं च पापाः पश्यन्तिसर्वतः ।
शुभग्रहा न पश्यन्ति माता च म्रियते तदा ॥ ६ ॥

सं० टी०—अथवा पापाः पापग्रहाः क्षीणचन्द्रं नष्टवीर्यं चन्द्रं सर्वतः पश्यन्ति । तथा यदि तं क्षीणचन्द्रं शुभग्रहा न पश्यन्ति । तदैवं विधे योगे जातस्य माता म्रियते ॥ ६ ॥

भा० टी०—जिसके जन्म के समय क्षीण चन्द्रमा को सभी पाप ग्रह देखते हों शुभ ग्रह बिलकुल न देखते हों तो उसके माता की निश्चय मृत्यु होती है ॥ ६ ॥

निधनारिगतश्चन्द्रो भौमश्च सप्तमे भवेत् ।
तस्य मातृविनाशः स्याद्यदिपापैः समन्वितः ॥ ७ ॥

सं० टी०—यदि चन्द्रो निधनारिगतः किंवाष्टषष्ठस्थानगतः । पुनर्यदि भौमः सप्तमे स्थाने भवेत् । तत्र यदि पापैः पापखेटैश्चन्द्रः समन्वितो युतो भवेत् । एवं विधे योगे यस्य जन्म तस्य मातृविनाशः स्यात् ॥ ७ ॥

भा० टी०—जिसके जन्म समय चन्द्रमा पाप ग्रहों से युक्त होकर षष्ट में अथवा अष्टम में हो और सप्तम में मंगल हो तो उसके माता की मृत्यु होती है ॥ ७ ॥

चन्द्राष्टमगते भौमे शत्रुस्थे क्रूरयोक्षिते ।
मातुस्तस्य भवेद्धानि पिता तस्य विदेशगः ॥ ८ ॥

सं० टी०—मामे मङ्गले चन्द्राष्टमगते चन्द्रादष्टमस्थे तथा शत्रुस्थे लग्नात्षष्ठस्थे तथा क्रूरवीक्षिते पापग्रहदृष्टे सति । तस्य मातुर्हानिर्विनाशः स्यात् । तथा तस्य पिता विदेशगः स्यादर्थाद्विदेशगस्य पितुः परोक्षस्य जन्म स्यात् ॥ ८ ॥

भा० टी०—जिसके जन्म समय चन्द्रमा से अष्टम में और लग्न से षष्ठ में यदि मगल हो ( अर्थात् लग्न से षष्ठ में मंगल एकादश में चन्द्रमा हो ) एवं स्थित मंगल पाप ग्रह से दृष्ट हो तो पिता के परोक्ष में उसका जन्म होता है तथा उस की माता मृत्यु को प्राप्त होती है ॥ ८ ॥

लग्नाच्चतुर्थगः पापो यदि स्याद्बलवत्तरः ।

तदा मातृवधं कुर्याच्चन्द्रोपेतो विशेषतः ॥ ९ ॥

सं० टी०—यदि पापः पापग्रहो लग्नाच्चतुर्थगस्तथा बलवत्तरो वीर्याधिकः तदा स च पापो मातृवधं मातृनाशं कुर्यात् । अथैवं यदि तादृशः पापश्चन्द्रोपेतश्चन्द्रेण सहितः । तदा विशेषतः मातृनाशो भवेत् ॥ ९ ॥

भा० टी०—यदि जन्म समय अति बलवान् पाप ग्रह लग्न से चतुर्थ में हो तो माता की मृत्यु करता है । यदि एव भूत पाप ग्रह चन्द्रमा से युक्त हो तो निश्चय माता की मृत्यु करता है ॥ ९ ॥

शनिमङ्गलयोर्मध्ये यदि तिष्ठति चन्द्रमा ।

तदा मातृवधो ज्ञेयो भौमार्कौ संयुतौ तथा ॥ १० ॥

सं० टी०—यदि चन्द्रमा शनिमङ्गलयोर्मध्ये तिष्ठति तथा यदि भौमार्कौ संयुतौ रविमङ्गलावेकत्र स्थितौ तदा मातृवधो ज्ञेयो गणकेनेति शेषः ॥ १० ॥

भा० टी०—यदि जन्म समय चन्द्रमा शनि और मङ्गल के अन्तर्गत (मध्यगत ) हो तथा मंगल रवि युक्त हो तो माता की मृत्यु होती है ॥१०॥

चन्द्रः पापसमायुक्तो लग्नात्केन्द्रगतो यदि ।

तदा मातृवधो ज्ञेयः सप्ताहान्नात्र संशयः ॥ ११ ॥

यदि चन्द्रः पापसमायुक्तः पापसहितः । पुनर्यदि लग्नात्केन्द्रस्थितो गतः । तदा सप्ताहाज्जन्मनः सप्ताहान्मातृवधो ज्ञेयः । इति संशयो न ॥ ११ ॥

भा० टी०—यदि जन्म समय चन्द्रमा पाप ग्रहों से युक्त होकर लग्न से केन्द्र स्थान में हो तो १ सप्ताह के अन्दर ही माता की मृत्यु होती है इसमें संशय नहीं है ॥ ११ ॥

इति मातृरिष्टम् ।



दिवसे तु पिता मित्रः पिता रात्रौ शनैश्चरः ।
भ्राता दिवाकरो रात्रौदिवसे च शनैश्चर ॥ १ ॥

दिवसे प्रसवे सति मित्रः सूर्यः पिता पितृसंज्ञकः स्यात् । रात्रौ प्रसवे सति शनैश्चरः पिता स्यात् । तथा रात्रौ प्रसवे सति दिवाकरः सूर्यो भ्राता भ्रातृसंज्ञकः स्यात् । दिवसे प्रसवे सति शनैश्चरश्चशब्दोपादानाद्भ्रातृसंज्ञकः स्यात् ॥ १ ॥

भा० टी०—यदि दिन में जन्म हो तो सूर्य पितृकारक होते हैं तथा रात्रि में जन्म हो तो शनिश्चर पितृकारक होते हैं । एवं दिन में जन्म हो तो शनिश्चर तथा रात्रि में जन्म हो तो सूर्य भ्रातृ कारक होते हैं ॥ १ ॥

निधने च गते सूर्ये सौरिभौमेक्षिते यदि ।
शुक्रगुर्वोर्नचालोकः सपिता म्रियते शिशुः ॥ २ ॥

सं० टी०—यदि सूर्ये निधने लग्नादष्टमे गते तथा सौरिभौमेक्षिते शनिमङ्गलाभ्यां दृष्टे "सौरिभौमयुते" इति वा पाठान्तरे ताभ्यां सहिते । तथा विधे सूर्ये सूर्योपरि यदि शुक्रगुर्वोः शुक्रबृहस्पतिग्रहद्वयस्य चावलोको दृष्टिर्नास्ति तदा सपिता पितृसहितः शिशुर्म्रियते ॥ २ ॥

भा० टी०—यदि जन्म समय शनि और मंगल से दृष्ट सूर्य लग्न से अष्टम में हो और बृहस्पति अथवा शुक्र इन दोनों में से किसी से दृष्ट न हो तो पिता के साथ नवजात शिशु की मृत्यु होती है ॥ २ ॥

अष्टमस्थो यदा चन्द्रो गुरुराहू द्वितीयगौ ।
सौरिभौमान्विते सूर्ये पितृहा सप्तवारात् ॥ ३ ॥

यदा चन्द्रो लग्नादष्टमस्थः। तथा गुरुराहू द्वितीयगौ। तथा यदि सूर्ये सौरिभौमान्विते पानियक्रलसहिते सति। जातः शिशुः सप्तवासरान्तितृहा पितृनाशकरः स्यात् ॥ ३ ॥

भा० टी०—यदि जन्म लग्न से अष्टम स्थान में चन्द्रमा, द्वितीय में गुरु और राहु हों तथा यदि सूर्य मंगल और शनि से युक्त होकर किसी स्थान में हो तो सात दिन के अन्दर ही पिता की मृत्यु होती है ॥ ३ ॥

लग्नाष्टमगते भौमे द्वादशे वा द्वितीयगे।

पितृनाशो भवेत्तस्य शुभैर्यदि न दृश्यते ॥ ४ ॥

स० टी०—भौमे लग्नाष्टमगते वा द्वादशे वा द्वितीयगे तथा यदि शुभैः स च भौमो न दृश्यते तदा तस्य शिशो पितृनाश स्यात्। वा षष्ठाष्टमगते भौमे रिष्फे पापद्वये व्यये इति पाठान्तरे तु भौमे षष्ठाष्टमगते तथा रिष्फे द्वादशे पापद्वये द्वौ पापग्रहौ वा व्यये व्ययः पापा। अन्यत्पूर्ववदिति ॥ ४ ॥

भा० टी०—यदि जन्म लग्न से अष्टम या द्वादश अथवा द्वितीय में यदि मंगल हो तथा एव विध मंगल शुभ ग्रह से यदि दृष्ट न हो तो शीघ्र पिता की मृत्यु होती है ॥ ४ ॥

अष्टमस्थो यदा भानुर्लग्ने राहुसमन्विते।

पिता वा म्रियते तस्य स्वयं च म्रियते शिशुः ॥ ५ ॥

यदा भानु सूर्योऽष्टमस्थस्तथा लग्ने राहु समन्विते राहुयुते सति। तस्य पिता म्रियते वा स्वयं शिशुर्म्रियते ॥ ५ ॥

भा० टी०—यदि जन्म लग्न से अष्टम में सूर्य तथा जन्म लग्न में राहु हो तो उसके पिता की मृत्यु होती है। अथवा बालक स्वयं ही मृत्यु को प्राप्त होता है ॥ ५ ॥

सोम सिद्धान्ते—

भौमे वा निधने चन्द्रः पापयुक्तो भवेद्यदि।

पितृघाती परोक्षे च माता वा म्रियते ध्रुवम् ॥ ६ ॥

' ' भौमो मङ्गलो वा चन्द्रो यदि निधनेऽष्टमे स्थितस्तथा पापयुक्तः पापग्रह-युतः । तदेवं विधे योगे जातः शिशुः पितृघाती पितृनाशकरः । ॥ तस्य परोक्षे ध्रुवं निश्चितं माता म्रियते ॥ ६ ॥

भा० टी०—जिस के जन्म लग्न से अष्टम में मंगल अथवा चन्द्रमा पाप ग्रहों से युक्त हों तो जातक के पिताकी मृत्यु होती है अथवा पिताके परोक्ष में माताकी मृत्यु होती है ॥ ६ ॥

रन्ध्रेऽर्के सप्तमे भौमे निधनस्थे च सूर्यजे ।

पितृमृत्युर्भवेत्तस्य शुभैर्यदि न दृश्यते ॥ ७ ॥

अर्के रवौ रन्ध्रेऽष्टमस्थे तथा यदि भौमे सप्तमे तथा च यदि सूर्यजे शनैश्चरे निधनस्थेऽष्टमस्थे सति । एवं विधो योगो यदि शुभै र्न दृश्यते तदा तस्य बालकस्य पितृमृत्युर्भवेत् ॥ ७ ॥

भा० टी०—जिस के जन्म लग्न से अष्टम में सूर्य और शनि तथा सप्तम में मंगल हों तथा ये ग्रह यदि शुभ ग्रह से दृष्ट न हों तो पिता की मृत्यु होती है ॥ ७ ॥

सूर्याच्च सप्तमस्थाने शनिर्भौमो यदा स्थितौ ।

तदा पितृवधो ज्ञेयस्तयोर्मध्येऽथवा रविः ॥ ८ ॥

यदा सूर्यात्सप्तमस्थाने शनिभौमौ स्थितौ स्यातामित्येको योगः । अथवा रविस्तयोः शनिमङ्गलयोर्मध्येस्थितः । तदा पितृवधो पितृनाशो ज्ञेयः ॥ ८ ॥

भा० टी०—जिस के जन्म समय सूर्य से सप्तम में यदि मंगल तथा शनि हो अथवा शनि और मंगल के मध्यगत रवि किस किसी स्थान में हो तो पिता की मृत्यु को करता है ॥ ८ ॥

कुजेन सहितो भानुः शनिना यदिवीक्षितः ।

शनिना संयुतो वापि कुजेन यदि वीक्षितः ॥ ९ ॥

स० टी०—यदि भानुः सूर्यः कुजेन मङ्गलेन सहितस्तथा शनिना वीक्षितः सन्दृष्टः । अथवा भानुः शनिना संयुतः कुजेन वीक्षित । तदेवं विधे योगद्वये जातस्योक्तवरफलं स्यात् ॥ ९ ॥

भा० टी०—जिस के जन्म समय मंगल से युक्त सूर्य को शनि देखता हो अथवा शनि से युक्त सूर्य को मंगल देखता हो तो उसके पिताकी मृत्यु होती है ॥ ९ ॥

दशभिश्च रवौ मीने पञ्चभिश्चन्द्रमा हरौ।
द्वाभ्यां चैव कुजे मेषे पितृहा सप्तवासरात् ॥ १० ॥

रवौ दशभिर्मीने तथा चन्द्रमा पञ्चभिर्हरौसिंहे। तथा कुजे द्वाभ्यां मेषे तदा सप्तवासरात्पितृहा स्यात् ॥ १० ॥

भा० टी०—जिस के जन्म समय सूर्य मीन के १० अंश पर चन्द्रमा सिंह में ५ अंश पर और मंगल मेष में २ अंश पर हो तो एवं विध योग में सात दिन के अन्दर उसके पिताकी मृत्यु होती है ॥ १० ॥

पञ्चभिर्भार्गवे युग्मे वह्निना म्रियतेशिशुः।*
अष्टाविंशन्मृगे भौमे पितृहा सप्तवासरात् ॥ ११ ॥

भार्गवे शुक्रे पञ्चभिर्युग्मे मिथुने तदा शिशुर्वह्निना म्रियते। अथ भौमे चाष्टाविंशन्मृगे किंवाष्टाविंशतिभिर्मकरे तदा सप्तवासरात्पितृहा स्यात् ॥ ११ ॥

भा० टी०—जिस के जन्म समय शुक्र मिथुन में ५ अंश पर हो वह बालक की मृत्यु अग्नि से होती है। तथा जिसके जन्म समय मंगल मकर में २८ अंश पर हो उसके पिता की मृत्यु ७ दिन के अन्दर होती है ॥ ११ ॥

इति पितृरिष्टम्।



---

* अथानुक्तकालारिष्टः वर्षेनाभिधीयन्ते तथा तस्याल्पारिष्टानन्त्याद् भीरसत्र मितिरितानार्थं प्रणीते बृहज्जातके—

योगे स्थानं गतवति बलिनश्चन्द्रे स्वं वा तनुगृहमथवा।
पापैर्दृष्टे बलवति मरणं वर्षस्यान्तः किल मुनि गदितम् ॥ १ ॥

अथ पुंस्त्री जन्मज्ञानमाह—

पुरुषः पुरुषक्षेत्रं यदि पश्यति सर्वथा।
तदा पुमान् संजानीयादन्यथा युवतिर्भवेत् ॥ १ ॥
योषित्क्षेत्रगतः शुक्रो बुधो वा यदि पश्यति।
तदा कन्यां विजानीयादन्यथा पुरुषो भवेत् ॥ २ ॥

सं० टी०—यदि पुरुषः पुरुषाभिध. खेटः पुरुषक्षेत्रं पुरुषसंज्ञकं राशिं सर्वथा पश्यति तदा पुमान् नरजन्म संजानीयात्। अन्यथा किन्तु स्त्रीसंज्ञकः खेटः स्त्रीराशिं पश्यति तदा युवतिः कन्या भवेत् ॥ १ ॥

यदि शुक्रो वा बुधो योषित्क्षेत्रगः स्त्रीराशिगतः। तथा वा स्त्रीराशिं पश्यति तदा कन्यां विजानीयात्। अन्यथा पुरुषो भवेत् ॥ २ ॥

भा० टी०—जिस जन्माङ्ग में पुरुषसंज्ञकग्रह ( सूर्य मङ्गल और बृहस्पति ) पुरुष संज्ञक ( मे. मि. सि. तु. ध. कुं. ) जन्म लग्नको देखते हों उसमें पुरुष का जन्म कहना चाहिये । अन्यथा स्त्री ग्रह यदि स्त्री संज्ञक जन्म लग्नको देखते हों तो कन्या का जन्म कहना चाहिये ॥ १ ॥

अथ यदि स्त्रीराशिगत शुक्र या बुध स्त्री राशि संज्ञक जन्म लग्न को देखे तो स्त्री का जन्म का जन्म कहना चाहिये अन्यथा पुरुष का जन्म कहना चाहिये ॥ २ ॥

अथ क्लीबजन्मज्ञानमाह—

सौरिदृष्टे बुधयुते शुभयोगविवर्जिते।
बुधमन्दगृहे जातः क्लीब एव न संशयः ॥ ३ ॥
शनिदृष्टे युते वापि वन्ध्या भवति निश्चितम्।
सुतस्थाने द्विपापे च त्रिपापे वाथ संयुते ॥ ४ ॥
तदा स्त्रीपुरुषौ वन्ध्यौ विज्ञेयौ शत्रुवीक्षितौ ॥ ५ ॥

जिस जन्माङ्ग में मिथुन कन्या मकर कुंभ इनमें से कोई जन्म लग्न बुध से युक्त और शनि से दृष्ट हो तथा शुभ ग्रह के योग से रहित हो तो जातक नपुंसक होता है ॥ ३ ॥

यदि पञ्चम भाव शनि से दृष्ट युक्त हो तथा दो २ वा तीन ३ पाप ग्रह यदि पञ्चम भाव में हों और शत्रु ग्रह से दृष्ट हों तो इस योग में उत्पन्न कन्या तथा पुरुष दोनों सन्तान रहित होते हैं ॥ ४ ॥ ५ ॥

अथ द्रेष्काण वशेन स्त्री पुरुष ज्ञानमाह—

मेषादिद्वादशे राशौ द्रेष्काणं च विनिर्दिशेत् ।
एकैकेन तु भागेन स्ततयं स्ततथं भवेत् ॥ १ ॥
आदिमध्यान्तभागेन ज्ञातव्यः पुरुषः स्त्रियः ।
स्त्रीभागे च भवेत्कन्या पुंभागे पुरुषोभवेत् ॥ २ ॥

भा० टी०—मेषादि बारह राशियों में प्रत्येक राशि में तीन तीन द्रेष्काण होता है । अर्थात् प्रत्येक राशि में आदि मध्य और अन्त्य भाग होता है वक्ष्यमाण प्रकार से स्त्री पुरुष द्रेष्काण ज्ञात कर अर्थात् स्त्री द्रेष्काण में स्त्री और पुरुष द्रेष्काण में पुरुष का जन्म होता है ॥ १ ॥ २ ॥

मेषस्य प्रथमे भागे द्रेष्काणे पुरुषो भवेत् ।
क्रोधनो वक्रनेत्रश्च कृष्णवर्णो दुरासदः ॥ ३ ॥
द्वितीयभागे सम्प्राप्ते नारी भवति निश्चितम् ।
स्थूलोदरी स्थूलमुखी युवती लोहिताकृतिः ॥ ४ ॥
तृतीये पुरुषः शूरो निर्भयश्चाति दुर्मतिः ।
कपिलोदारुणश्चैव सत्यशौचविवर्जितः ॥ ५ ॥

भा० टी०—मेष राशि के प्रथम द्रेष्काण में क्रोधी वक्र ( तिरछी ) नेत्र से युक्त कृष्ण वर्ण तथा भयङ्कर पुरुष का जन्म होता है ॥ ३ ॥

द्वितीय द्रेष्काण में निश्चय करके स्थूल उदर (पेट) तथा मुख से युक्त और लाल वर्ण वाली स्त्री का जन्म होता है ॥ ४ ॥

तथा तृतीय द्रेष्काण में शूर निर्भय अति दुष्ट तथा कपिल (भूरा) वर्ण से युक्त कठोर और सत्य तथा पवित्रता से रहित पुरुष का जन्म होता है ॥ ५ ॥

अथ वृषराशिस्थद्रेष्काणजस्वरूपमाह—

वृषस्य प्रथमे भागेमवेन्नारो पतिव्रता।
स्थूलोदरी दग्धपटा स्वल्पकेशो प्रियंवदा ॥ ६ ॥
द्वितीयभागे सम्प्राप्ते कुशलः सर्वकर्मसु।
बृहत्कायो बृहत्पादस्तृतीये पुरुषो महान् ॥ ७ ॥

भा० टी०—वृष राशि के प्रथम द्रेष्कारण में स्थूल उदर (पेट) से युक्त जले या फटे कपड़े से युक्त तथा स्वल्प केशों से युक्त और मधुर बोलनेवाली तथा पतिव्रता स्त्री का जन्म होता है ॥ ६ ॥

द्वितीय द्रेष्काण में सभी कार्यों में चतुर तथा बृहत् शरीर और बृहत्पाद (चरणों) से युक्त पुरुष का जन्म होता है। एवं वृष के तृतीय द्रेष्काण में श्रेष्ठ पुरुष का जन्म होता है ॥ ७ ॥

मिथुनराशिस्थद्रेष्ककाणज स्वरूपमाह—

द्रेष्काणे प्रथमे युग्मे नारी भवति सुन्दरी।
द्वितीये पुरुषः शूरो धनुर्विद्याविशारदः ॥ ८ ॥
तृतीये पुरुषो धन्वी पण्डितो रत्नसयुतः।
गोधनैरपि संयुक्तः कृषि कर्मणि तत्परः ॥ ९ ॥

भा० टी०—मिथुन लग्न के प्रथम द्रेष्काण में सुन्दरी स्त्री का जन्म होता है। द्वितीय द्रेष्काण में शूर तथा धनुर्विद्या में चतुर पुरुष का जन्म होता है ॥ ८ ॥

एवं तृतीय द्रेष्काण में धनुषधारी चतुर रत्नों से युक्त तथा गो धन ( गाय बैल इत्यादि ) से युक्त और कृषि कार्य में तत्पर पुरुष को जन्म होता है ॥ ९ ॥

कर्कराशिस्थद्रेष्काणज स्वरूपमाह—

कर्कटप्रथमे भागे शरीर हस्तिवद्दृढम् ।
मुखं सूकरवज्ज्ञेयं जायते पुरुषो महान् ॥ १० ॥
द्वितीये सुन्दरी नारी तृतीये सुन्दरः पुमान् ।
जनप्रियः सुरूपश्च नौकावाणिज्यतत्परः ॥ ११ ॥

भा० टी०—कर्क लग्न के प्रथम द्रेष्काण में हाथी के तरह दृढ शरीर तथा सूकर के तरह लम्बा मुख वाले श्रेष्ठ पुरुष का जन्म होता है ॥ १० ॥

द्वितीय द्रेष्काण में सुन्दर लोक प्रिय तथा शोभनाकार से युक्त और नौका से वाणिज्य करने वाले पुरुष का जन्म होता है ॥ ११ ॥

अथ सिंह तथा कन्या राशिस्थद्रेष्काणज स्वरूपमाह—

पुरुषः प्रथमे सिंहे मुखं जम्बुकवद्दृढम् ।
द्वितीये पुरुषो धन्वी उच्चनासः सुरूपकः ॥ १२ ॥
तृतीये पुरुषो जातः उच्चनासो हि कन्धरः ।
कन्यायाः प्रथमे नारी द्वितीये लेखकः पुमान् ॥ १३ ॥
तृतीये सुन्दरी नारी तुङ्गधौतार्द्रवाससा ।
हास्ययुक्ता चन्द्रमुखी रुक्षासन्तार्थजिता ॥ १४ ॥

भा० टी०—सिंह लग्न के प्रथम द्रेष्काण में सियार के तरह दृढ मुख से युक्त पुरुष होता है । द्वितीय द्रेष्काण में धनुष को धारण करने वाला तथा उच्च नासिका से युक्त सुन्दर पुरुष होता है । तृतीय द्रेष्काण में उत्पन्न उच्च नासिका तथा कन्धे युक्त पुरुष होता है ॥ कन्या लग्न के प्रथम द्रेष्काण में

स्त्री का जन्म होता है, द्वितीय द्रेष्काण में खेल ( क्रीड़ा ) करने वाले पुरुष का जन्म होता है । तृतीय द्रेष्काण में सुन्दर कन्या का जन्म होता है जो कि श्रेष्ठ धौत ( धुले हुए ) तथा आर्द्र वसनों से युक्त हास्य युक्त और चन्द्रमुखी होती है परन्तु लज्जा तथा सन्तान से रहित होती है ॥१२॥१३॥१४॥

अथ तुला वृश्चिकयोः राशिस्थयोः द्रेष्काण फलमाह—

पुरुषः प्रथमे चैवतुलायाश्च तुलाधरः ।
क्षुधितस्तृषितश्चैव द्वितीये पुरुषो भवेत् ॥ १५ ॥
तृतीये पुरुषो दीनो सदा दीर्घमुखः स्मृतः ।
स्थाने च्युता भवेन्नारी वृश्चिकप्रथमे भवेत् ॥ १६ ॥
द्वितीये च भवेन्नारी सुखं वाञ्छति सर्वदा ।
तृतीये पुरुषश्चैव तस्करश्चञ्चलो भवेत् ॥ १७ ॥

भा० टी०—तुला लग्न के प्रथम द्रेष्काण में तराजू तौलने वाले तथा भूखे प्यासे पुरुष का जन्म होता है । तथा द्वितीय भाग में भी पुरुष का जन्म होता है । तृतीय द्रेष्काण में दीन तथा दीर्घ मुख पुरुष का जन्म होता है । वृश्चिक लग्न के प्रथम द्रेष्काण में स्थान भ्रष्टा नारी का जन्म होता है । द्वितीय द्रेष्काण में सर्वदा सुख को चाहने वाली कन्या का जन्म होता है । तथा तृतीय द्रेष्काण में पुरुष का जन्म होता है जो कि तस्कर और चञ्चल होता है ॥ १५ ॥ १६ ॥ १७ ॥

अथ धनुर्मकरराशिस्थयोः द्रेष्काणफलमाह—

धनुषः प्रथमे धन्वी पुरुषो जायते महान् ।
सदा सुरूपा गौराङ्गी द्वितीये सुन्दरी भवेत् ॥ १८ ॥
तृतीये पुरुषः शूरो धनुर्विद्याविशारदः ।
मकरप्रथमे भागे पुरुषो जायते महान् ॥ १९ ॥
स्वर्णालङ्कारसंयुक्ता द्वितीये सुन्दरी भवेत् ।
तृतीये पुरुषो धन्वी भवेत्स्थूलमुखः सदा ॥ २० ॥

भा० टी०—धन लग्नके प्रथम द्रेष्काण में श्रेष्ठ तथा धनुषधारी पुरुष का जन्म होता है। द्वितीय द्रेष्काण में सर्वदा पुरुष गौरवर्ण युक्त सुन्दरी कन्या का जन्म होता है। तृतीय द्रेष्काण में शूर तथा धनुर्विद्या में कुशल पुरुष का जन्म होता है। मकर लग्न के प्रथम द्रेष्काण में श्रेष्ठ पुरुष का जन्म होता है। द्वितीय द्रेष्काण में सुवर्ण के आभूषणों से संयुक्त सुन्दरी का जन्म होता है। तथा तृतीय द्रेष्काण में स्थूल मुख तथा धनुष धारण करने वाला पुरुष का जन्म होता है॥ ८॥ १९॥ २०॥

अथ कुम्भमीन राशिस्थयोः द्रेष्काण फलमाह—

कुम्भस्य प्रथमे भागे पुरुषस्थूलदन्तकः ।
स्थिरबुद्धिः सती चैव द्वितीये सुन्दरी भवेत् ॥ २१ ॥
तृतीये पुरुषः श्यामो रोगकर्णो भवेत्सदा ।
पुरुषः प्रथमे मीने भवेल्लोकप्रियः सदा ॥ २२ ॥
द्वितीये सुन्दरी गौरी तृतीये पुरुषो भवेत् ।
नारीपुरुषयोर्म्मध्ये सर्वभेदः प्रकीर्त्तितः ॥ २३ ॥

इति स्त्रीपुरुषविचार ।



भा० टी०—कुंभ लग्न के प्रथम द्रेष्काण में स्थूल दांत वाले पुरुष का जन्म होता है। द्वितीय द्रेष्काण में स्थिर बुद्धि तथा पतिव्रता स्त्री का जन्म होता है। तृतीय द्रेष्काण में पुरुष का जन्म होता है जो कि श्याम वर्ण तथा कर्णरोग से युक्त होता है। मीन लग्न के प्रथम द्रेष्काण में लोक प्रिय पुरुष का जन्म होता है। द्वितीय द्रेष्काण में सुन्दरी तथा गौरवर्णाही कन्या का तथा तृतीय द्रेष्काण में पुरुष का जन्म होता है। ये सभी स्त्री पुरुष के ज्ञान के लिये कहे गये हैं॥ २१ ॥ २२ ॥ २३ ॥

इति स्त्री पुरुष विचार ।



अथ जारजकन्याजन्मयोगमाह—

द्वादश्यां तु द्वितीयायां सप्तम्यां भग्नऋक्षके।
रविमन्दकुजे जाता जारजा परिकीर्त्तिता॥ १॥

सं॰ टी॰—द्वादश्यां वा द्वितीयां वा सप्तम्यां तिथौ तथा भग्नऋक्षके* तथा रविमन्दकुजे वासरे। जाता किञ्चोत्पन्ना कन्या जारजा अन्योत्पन्ना परिकीर्तिता कथिता॥ १॥

भा॰ टी॰—जिसके जन्म समय रविवार भौमवार शनिवार इनमें से कोई एक दिन हो तथा भग्न नक्षत्रों (कृ, पुन, उ. फा. वि उ, षा, पूभा,) में से कोई एक नक्षत्र हो द्वादशी द्वितीया सप्तमी में से एक कोई तिथि हो अर्थात् इन दिन नक्षत्र और तिथियों में से एक २ का योग हो तो इस योग में जन्मी हुई कन्या जार से (अन्य से) पैदा होती है॥ १॥

जारजातभङ्गमाह—

जीवक्षेत्रेऽथजीवाढ्ये जीवेनालोकितेऽथवा।
जीवांशकादिसम्बन्धे जारयोगविभङ्गकृत्॥ २॥

सं॰ टी॰—जीवक्षेत्रे गुरुराशौ, तथा जीवाढ्ये गुरुयुते। अथवा जीवेनालोकिते गुरुदृष्टे। तथा जीवांशकादिसम्बन्धे गुरोर्नवांशकादिषड्वर्गे सति। तदा जारयोगविभङ्गकृदर्थात्पूर्वोक्तजारयोगस्य नाशकृत्स्यात्॥ २॥

इति सामान्यजारयोगः।†



* भद्राख्य तिथि युक्तेषु, विपादर्क्षान्वितेषु च।
मन्दार्क भौमवारेषु ज्ञातमन्योद्भवं विदुः॥ १॥

† तदुक्तं भगवान्गार्गिः—
गुरुक्षेत्रगते चन्द्रे तद्युक्ते चान्यराशिगे।
तद्द्रेष्काणे तदंशेवा न परैर्जात इष्यते॥ १॥

भा० टी०—यदि जन्म समय जन्म लग्न अथवा चन्द्रमा कोई भी बृहस्पति की राशि में हो अथवा बृहस्पति से युक्त हो अथवा बृहस्पति के अंशादि ( द्रेष्काण वा नवांश वा द्वादशांश या त्रिंशांश ) में हो तो जारजात योग का नाशक होता है अर्थात् एवं योग में जात बालक अपने पिता का औरस पुत्र होता है ॥ २ ॥



अथाङ्गभङ्ग योगानाह--

मौमक्षेत्रे गते लग्ने रविक्षेत्रे शनैश्चरे।

स पापेन युतो वापि भुजच्छेदो भवेद्‌ध्रुवम् ॥ १ ॥

सं० टी०—लग्ने भौमक्षेत्रगते मेषवृश्चिकराशिगे तथा शनैश्चरे रविक्षेत्रे सिंहराशिगते तथा स च पापेन पापग्रहेण युतः सहितः । तदा ध्रुवं निश्चितं भुजच्छेदो हस्तनाशो भवेत् ॥ १ ॥

भा० टी०—जिसके जन्म समय मेष या वृश्चिक लग्न हो और शनि पाप ग्रह से युक्त होकर सिंह राशि में हो तो उसका निश्चित भुजच्छेद ( अर्थात् हाथ किसी शस्त्र से कट जाता है ) होता है ॥ १ ॥

शत्रुगेहे यदा शौरिः शत्रुयुक्तोरिवीक्षितः।

एकपादकरच्छेदः प्राक्तनैः परिकीर्त्तितः ॥ २ ॥

यदा शौरिः शनिः शत्रुगेहे स्वशत्रुराशिगः । तथा शत्रुयुक्तः स्वशत्रुणा सहितः। तथारिवीक्षितः शत्रुदृष्टः। तदा प्राक्तनैः प्राचीनगणकैरेकपादकरच्छेदः स्यादयदिकचरणस्य तथैकहस्तस्य च नाशो भवेत्। इति कथितः ॥ २ ॥

भा० टी०—जिस के जन्म समय शनि शत्रु ग्रह से युक्त और शत्रु से दृष्ट होता हुआ शत्रु ग्रहकी राशि में हो तो उसके एक हाथ तथा एक पैर का भंग ( नाश होता है ॥ २ ॥

मृत्युस्थानगतो भौमः शनिराहुयुतेक्षितः।

चतुर्हस्तपदच्छेदो मुनिभिः परिकीर्त्तितः ॥ ३ ॥

भौमो मृत्युस्थानगतो लग्नादष्टमस्थानस्थितः। तथा शनिराहुयुतेक्षित शनिराहूभ्यां युतदृष्टः। तदा मुनिभिश्चतुर्हस्तपदच्छेदः परिकीर्त्तितः किन्तु चतुर्हस्तस्तथा चरणनाशश्च कथित.॥ ३॥

भा० टी०—जिस के जन्म समय शनि तथा राहु से युक्त दृष्ट भौम अष्टम स्थान में हो तो उसके चारों हाथ और पैर का भंग होता है॥ ३॥

शनिगेहे यदा राहुः शशी सिंहेभवेद्यदि।

शिरश्छेदाख्ययोगोऽयं विष्णुना परिकीर्त्तितः॥ ४॥

सं० टी०—राहु शनिगेहे मकरकुम्भराशौ गतः। तथा शशी चन्द्र सिंहे भवेत्। तदा विष्णुनाऽयं शिरश्छेदाख्ययोगः परिकीर्त्तितः कथित॥ ४॥

भा० टी०—जिसके जन्म समय राहु मकर या कुम्भ में हो तथा चन्द्रमा यदि सिंह राशि में हो तो उसका शिरच्छेद होता है (अर्थात् चोट आदि से शिर कुछ कट जाता है अर्थात् घाव वगैरह होने से चीरा जाता है) यह शिरच्छेद योग श्री विष्णु भगवान से कहा गया है॥ ४॥

अष्टमस्थो यदा सोमो रवियुक्तोभवेद्यदि।

शिरश्छेदाख्ययोगोऽयं विष्णुना प्रकीर्त्तितः॥ ५॥

सं० टी०—यदा सोमश्चन्द्रोऽष्टमस्थस्तथा यदि रवियुक्तः। तदा विष्णुनै-वायं शिरश्छेदाख्ययोग प्रकीर्तितः॥ ५॥

भा० टी०—यदि सूर्य से युक्त चन्द्रमा अष्टम में हो तो [illegible] भी शिरच्छेद योग होता है यह भी भी विष्णु भगवान् से कहा गया है इस योग में उत्पन्न बालक का शिर किसी कारण से चीर फाड़ को प्राप्त होता है॥ ५॥

नेत्रनाशयोगमाह—

पापत्रययुतः सोम शत्रुगेहे व्ययस्थितः।

शुभग्रहा न पश्यन्ति चक्षुर्नाशो भवेद्ध्रुवम्॥ ६॥

यदा सोमश्चन्द्रः पापत्रययुत. पापग्रहत्रयेण सहितस्तथा शत्रुगेहे स्वशत्रु-राशौ व्ययस्थित' संस्थित.। तथा शुभग्रहास्तं चन्द्रं न पश्यन्ति। तदा ध्रुवं, चक्षुर्नाशो नेत्रनाशो भवेत्॥ ६॥

भा० टी०—यदि तीन पाप ग्रहों से युक्त होकर चन्द्रमा षष्ठ स्थान (भाव) में हो तथा कोई भी शुभ ग्रह उसे देखता नहीं हो तो निश्चित नेत्र नाश करता है ॥ ६ ॥

अथ खञ्जयोगमाह—

कण्टकस्थो यदा सौरिः शशियुक्तोभवेद्यदि ।
शुभग्रहा न पश्यन्ति खञ्जो भवति नान्यथा ॥ ७ ॥

यदा सौरिः शनिः कण्टकस्थः केन्द्रगतस्तथा शशियुक्तश्चन्द्रसहितः। तथा शुभग्रहास्तं शनिं न पश्यन्ति तदा जातः खञ्जः पङ्गुर्भवति। अन्यथा न स्यात्। कर्कटस्थो" इति पाठान्तरम् ॥ ७ ॥

भा० टी०—यदि चन्द्रमा से युक्त शनि केन्द्र स्थान में हो तथा शनि को शुभ ग्रह नहीं देखते हों तो जातक खञ्ज अर्थात् पङ्गु होता ॥ ७ ॥

अथ काणयोगमाह—

अष्टमस्थो यदा भानुः शशिशुक्रावलोकितः।
रिपुगेहे विशेषेण काणयोगो भवेद्ध्रुवम् ॥ ८ ॥

सं० टी०—यदा भानुरष्टमस्थस्तथा शशिशुक्रावलोकितश्चन्द्रशुक्राभ्यां सन्दृष्टः। तथा रिपुगेहे शत्रुराशौ स्थितः। तदा विशेषेणायं ध्रुवं काणयोगो नेत्रनाशकयोगो भवेत् ॥ ८ ॥

भा० टी०—यदि चन्द्रमा तथा शुक्रसे दृष्ट सूर्य यदि शत्रु ग्रहके राशिका होकर अष्टम स्थान में हो तो विशेष करके काण योग होता है ॥ ८ ॥

अथ महापातक योगमाह—

राहुणा सहितो मन्दः पापर्क्षेशत्रुवीक्षितः।
महापातकयोगोऽयं यदि ग्रहसमो भवेत् ॥ ९ ॥

सं० टी०—यदा मन्द शनी राहुणा सहितस्तथा पापर्क्षे पापराशौ गतस्तथा शत्रुवीक्षितः शत्रुदृष्टस्तदाऽयं महापातकयोगः स्याद्यद्यस्मिन् योगे ग्रस्य

जन्म ■ च महत्पापकारको भवेत् । यदि ब्रह्म समोभवेत्तथापि जातो महत्पापकारकः ॥ ९ ॥

भा० टी०—यदि शत्रु ग्रह से दृष्ट तथा राहु से युक्त शनि पाप ग्रहके राशि में हो तो यह पातक योग होता है इस योग में उत्पन्न नर यदि ब्रह्मा के तुल्य भी हो तो महत्पाप कारक अर्थात् ब्रह्म घाती होता है ॥ ९ ॥

अन्यच्च माह—

पापत्रययुतश्चन्द्रो रविभौमावलोकितः ।
स भवेद्ब्रह्मघाती च शनियुक्तश्च गोवधी ॥ १० ॥

यदा चन्द्र पापत्रययुतस्त्रिभिः पापग्रहैः सहितः।तथा रविभौमावलोकितः । तदा स च जातो ब्रह्मघाती ब्रह्महत्यादिपापकारकः । अनेवं यदि स चन्द्रः शनिना युक्तस्तदा जातो गोवधी गोहननकारकः स्यात् ॥ १० ॥

भा० टी०—जिसके जन्म समय सूर्य तथा भौम से दृष्ट चन्द्रमा तीन पापग्रहों से युक्त हो वह ब्रह्मघातक होता है । अथ यदि रवि तथा मंगल से दृष्ट चन्द्रमा केवल शनि से युक्त हो तो जातक गोघातक होता है ॥ १० ॥

अथ आत्मघातकयोगमाह—

एकत्र च त्रय पापा ग्रहास्तिष्ठन्ति यस्य च ।
शूलयोगो भवेत्तस्य नात्र कार्या विचारणा ॥ ११ ॥

यस्य जन्म समये त्रयः पापग्रहा एकत्रस्थाने तिष्ठन्ति । तस्य शूलयोगो भवेत् । अत्रास्मिन् शूलयोग विचारणा न कार्या । अर्थादस्मिन्योगे समुत्पन्नस्य नरस्य किमुतफल वक्तव्यं किन्तु स्वतः स च शूलादिना पापकारकः ॥ ११ ॥

भा० टी०—जिसके जन्म समय तीन पाप ग्रह एकत्र स्थित हो ( परन्तु शुभ से युक्त दृष्ट न हों ) तो वह जातक स्वयं फांसी आदि लगाकर आत्म हत्या करता है । इस में विचार ने की आवश्यकता नहीं है ॥ ११ ॥

अथ पापिष्ठयोगमाह—

पापत्रययुतः सूर्यः शुक्राचार्यविवर्जितः ।
पापिष्ठं कुरुते नित्यं स्वल्पायुश्च न संशयः ॥ १२ ॥

यदा सूर्यः पापत्रययुतः पापग्रहत्रयेण सहितः । तथा शुक्राचार्यविवर्जितः शुक्रेण युतो न तथा दृष्टो न स्यात् । तदा स सूर्यः पापिष्ठं नरं नित्यं कुरुते तथा स्वल्पायुश्च भवेदिति संशयो न स्यात् ॥ १२ ॥

भा० टी०—जिसके जन्म समय शुक्र के योग तथा दृष्टि रहित सूर्य तीन पाप ग्रहों से युक्त हो तो जातक नित्य अत्यन्त पाप करने वाला होता है तथा अल्पायु होता है ॥ १२ ॥

अन्यच्च—

पापगेहे पापगतो रविभौमावलोकितः ।
ब्रह्मघाती भवेन्नित्यं सूर्यपुत्रेण गोवधी ॥ १३ ॥

यदि पापगेहे पापराशौ पापखग पापग्रहस्तथा रविभौमावलोकितः । तदा नित्यं स च जातो ब्रह्मघाती भवेत् । तथा यदि स च पापग्रह सूर्यपुत्रेण शनिना सहितस्तदा स च गोवधी स्यात् ॥ १३ ॥

भा० टी०—जिसके जन्म समय सूर्य तथा मंगल से दृष्ट कोई पाप ग्रह ( राहु या केतु अथवा शनि ) किसी पाप ग्रह के राशि में हो तो वह जातक ब्रह्म घातक होता है तथा यदि शनि से युक्त वह पाप ग्रह हो तो गोवध करने वाला होता है ॥ १३ ॥

अथ पशुभिर्मरण योगमाह—

चन्द्रसूर्यगृहे राहुश्चन्द्रसूर्ययुतो यदि ।
मृत्युस्थो मदनस्थो वा पशुभिर्हन्यते तदा ॥ १४ ॥

यदा राहुश्चन्द्रसूर्यगृहे कर्के वा सिंहेगतः तथाचन्द्रसूर्ययुतः । तथा तादृशो राहुर्मृत्युस्थो लग्नादष्टमस्थो वा मदनस्थः सप्तमगतः । तदा स च नरः पशुभिर्हन्यते ॥ १४ ॥

भा॰ टी॰—जिसके जन्मसमय कर्क अथवा सिंह राशि का राहु अष्टम अथवा सप्तम में हो तथा चन्द्रमा सूर्य के साथ हो तो वह जातक पशु से मृत्यु को प्राप्त होता है ॥ १४ ॥

अथ जलजन्तुभिर्मरणे योगमाह—

शत्रुगेहे यदा सौम्यः शत्रुयुक्तोरिवीक्षितः ।
षष्ठाष्टमस्थितश्चन्द्रो हन्यतेजलजन्तुभिः ॥ १५ ॥

यदा सौम्यः शत्रुगेहे स्थितस्तथा शत्रुयुक्तः । वारिवीक्षितः शत्रुदृष्टः । तथा चन्द्रः षष्ठाष्टमस्थितः । तदा जातो नरो जलजन्तुभिः किन्तु गोधादिकै-र्हन्यते ॥ १५ ॥

भा॰ टी॰—यदि बुध शत्रु से युक्त या दृष्ट होकर शत्रु ग्रहकी राशि में हो तथा चन्द्रमा षष्ट या अष्टम में हो तो जातक गोधादिकों से मृत्यु को प्राप्त होता है ॥ १५ ॥

अथ सर्पेण मृत्यु योगमाह—

मृत्युस्थो यदि वा भौमः शत्रुगेहेन्दुसयुतः ।
एष नाशकरो योगो द्विजिह्वेन न संशयः ॥ १६ ॥

यदि वा भौमो मृत्युस्थोः लग्नादष्टमगस्तथाशत्रुगेहे स्थिः । तथेन्दुसंयुतश्च-न्द्रसहितः । तथा "शनियुक्तस्तथा रिपोर्गृहे स्वशत्रुराशौ गतः । तदैव योगोद्वि-जह्वेन सर्पादिना नाशकरो मृत्युकरः स्यात् । इति संशयो न ॥ १६ ॥

भा॰ टी॰—जिसके जन्म समय मंगल अपने शत्रु ग्रह के राशि में चन्द्रमा से युक्त हो तो उसकी सर्प से मृत्यु होती है । इसमें संशय नहीं है ॥ १६ ॥

अथ अतिभ्रष्ट योगमाह—

अष्टमे सप्तमे वापि रविराहुकुजार्कजाः ।
भुयमश्नाति नीचान्नं यदि स्यान्मघवानपि ॥ १७ ॥

यदि रविराहुकुजार्कजा अष्टमे वा सप्तमेस्थिताः स्युः । तदैवं योगे जातो ध्रुवं नीचान्नं हीनवर्णस्यान्नमश्नाति भक्षति यदि मघवानिन्द्रोपि स्यात्तदैवं योगे जातिभ्रष्टो भवेत् ॥ १७ ॥

यदि रवि राहुमङ्गल और शनि यदि ये चारों ग्रह सप्तम या अष्टम में हों तो इस योग में यदि इन्द्र भी जन्म लें तो वह भी नीचजाति के अन्न को खाते हैं तो अन्य पुरुष की गणना ही क्या ॥ १७ ॥

अन्यच्च—

लग्नाद्व्ययगतो राहुः पातित्यं कारयेत् ध्रुवम् ।
पापक्षेत्रस्थितं वाच्यं मिथ्यावादं शुभालये ॥ १८ ॥

यदा राहुर्लग्नाद्व्ययगतो द्वादशस्थः । तदोत्पन्नंनरं ध्रुवं पातित्यं जातिभ्रष्टं कारयेत् । परमेवं तदैव यदा स च राहुः पापक्षेत्रे पापराशौ स्थितः । यदि तादृशो राहुः शुभालये शुभराशौ गतस्तदा मिथ्यावाद कारयेत् ॥ १८ ॥

भा० टी—यदि जन्म लग्न से व्यय भाव में राहु हो तो जाति भ्रष्ट करता है परन्तु यदि उक्त राहु पाप ग्रहके राशि में हो तो उक्त फल होता है यदि शुभ ग्रह के राशि में हो तो मिथ्या अपवाद होता है ॥ १८ ॥

अथ रिपुभिर्नाश योगमाह—

शत्रुस्थाने स्थितो जीवो रिपुगेहे बुधेक्षितः ।
एष शत्रुहतो योगो यदि शक्रसमो भवेत् ॥ १९ ॥*

यदि जीवो बृहस्पतिः शत्रुस्थाने लग्नात्षष्ठस्थाने स्थितः । तथा रिपुगेहे स्वशत्रुराशौ गतस्तथा बुधेक्षितो बुधदृष्टः । तदैष योगः शत्रुहतो स्वशत्रुणा नाशकरो भवेत् । यदि शक्रसम स्यात्तथापीदं फलं भवेत् ॥ १९ ॥

इति प्रजापतिदाससंगृहीतो दुर्मरणयोग समाप्तः ।

---

* स्वगेहे शुभगेहे वा षष्ठो गुरुरमित्रहा ।
शत्रुगे अरिणा दृष्टः शत्रुपीडां ददाति सः ॥ होरा रत्ने ॥ गोविन्दः

भा० टी०—जिस के जन्म समय लग्न से षष्ट स्थान में बृहस्पति शत्रु ग्रह की राशि में हो तथा बुध से दृष्ट हो तो यदि जातक इन्द्र तुल्य भी पराक्रमी हो तो भी शत्रु से मारा जाता है ॥ १९ ॥

इति गणितफलितज्यौतिषाचार्य पण्डित श्रीगोविन्द शर्म पाण्डेय कृता सरल भाषा-टीका समाप्ताः।



भीमाइनाथोऽजनि विद्वरिष्टः,
तज्ज्येष्ठपुत्रो चतुर पटिष्ठः।
नेनाभिधानः किलतत्कीलतत्कनिष्ठः,
तत्पृष्ठजातो निजधर्मनिष्ठः ॥ १ ॥

कैलूसमाख्योऽस्य च पृष्ठजन्मा,
मुकुन्दमूर्त्तिस्तु मुकुन्दनामा।
ज्येष्ठात्मजाद्यो विदितैकनामा,
सोनेसमाख्यः सुकृतैकधामा ॥ ४ ॥

तस्यानुजः श्रीयुतनन्दलालः,
स्वविक्रमेणाखिललोकलालः।
तत्पृष्ठजः मान्नसुतन्त्रजालः,
श्रीलादिनाथाद्गरजः सुशीलः ॥ ३ ॥

श्रीकृष्णदत्तोऽकृत वै विशुद्धां,
सुबोधिनीं सत्स्वरशास्त्रजतम्।
रसाश्विनागेन्दुशकेऽब्दजाते,
पौषेऽतियत्नीन्नपुरेऽत्र शुभे ॥ ४ ॥

## टीकाकर्त्तुर्वंशपरिचयः ।



नागनन्दनिधिभूमितेऽब्दके रामजन्मनि तिथौ शुभे मधौ ।
या स्वरेविवृतिराशुगादिमे सा सर्मापिशिवयोः पदाम्बुजे ॥१॥

अस्ति श्रीवलियापुरस्य सविधे पूरेतिनाम्नाश्रुतो
ग्रामो भूमिसुरैः सुभापितशतैर्धर्माभिमुखैः संश्रितः ।
तत्रोदारगुणावलीवलयितो जातो विदामग्रणीः,
शश्वच्छ्रीपति पादपद्मनिरतो रामोऽपि योलक्ष्मणः ॥ २ ॥

तस्य श्रीकमलापतेरिव भुजाश्चत्वार आसन् सुताः,
ज्यायान् रामउमदेपाण्डितवराज्योतिर्विदां संमतः ।
द्वैतीयीक उदारशक्तिरतुलोलोकेगणेशः सुधीः,
तार्तीयीक इहास्ति भूमिवलये मान्यो महेशो बुधः ॥ ३ ॥

भ्राता तस्य लघुर्गुणैः किलगुरुर्विन्ध्येश्वरी संज्ञया,
वित्तोऽसौ भुवने प्रसादपरया दीपज्ञचूडामणिः ।
यः सौमित्रिरिवाग्रजस्य सततं सेवापरः सादरं,
श्रीमन्तं मनुते महेशविबुधं मूर्त्यन्तरं शङ्करम् ॥ ४ ॥

श्रीमन्महेशस्य सुतः सुतीव्र तपःप्रभावोज्ज्वलितस्य लोके ।
गोविन्दशर्माऽस्मिमयाप्यधायि पञ्चस्वरे विवृतिरत्रहृद्या ॥ ५ ॥

अन्नपूर्णाविश्वनाथौ जननी जनकाविव ।
सर्वस्वं मम तावेव विश्वस्मिन्मङ्गलप्रदौ ॥ ६ ॥

॥ इति शुभम् ॥